न्तरा च कृतवान् श्रीठक्कुरादर्शोपदेशचर्चाम्।

श्रीठक्कुरः पुनः पुनः प्राह, आत्ममुक्तिः स्वार्थप्रचोदितव्यापार एव। आत्ममुक्तये करणीया जनसेवा। भेदज्ञानविलोपनपूर्वकं धर्मभित्त्यवलम्बनेन भारतवर्षस्य पुनः संघटनमेव परमकृत्यम्। अयमादर्शः स्वामिमहोदयेन गुरुभ्रातृवृन्दसमीपे महता कण्ठरवेण भूयो भूयः सुप्रकटीकृतः।

मठस्य व्यवस्थापनादिकं समाप्य १८८६ खीष्टाब्दीय-डिसेम्बरमासि स्वामिमहाराजः पुनरपि कलिकातानगरीं परितत्याज। प्राथम्येन वैद्यनाथधाम, तदनन्तरं वाराणसी, अथ गाजीपुरमण्डलमासीत् पर्यटनस्थलम्।

आकृष्यमाणो हि बहिःप्रकृत्या
पर्यत्यजद् यः स्वगृहं पुरैव।
एकत्र तिष्ठेत् स कथं चिराय
गृहीव मुग्धः स्वजनप्रसङ्गात्॥ ४५

गाजीपुरस्थ "पाओहारीबाबा"-संदर्शनमासीत् स्वामिमहाराजस्य परमाकर्षणकारणम्। सौभाग्यात् साधुरसौ परिदृष्ट आसीत् स्वामिमहोदयेन। योगसाधनार्थं दीक्षा तत्सकाशे समासादनीयेति मनसि स्थिरीकृत्य तद्धेतोर्दिननिर्धारणमपि तेन कृतम्।

अथ निर्दिष्टे दिवसे स्वामिमहाराजश्चिन्तातुरो बभूव। अपि किमप्यन्याय्यमाचर्यते? "पाओहारीबाबा"-प्रभावात् अभिभूतेन मया भगवतः श्रीरामकृष्णस्य महिमा किमु खर्वीक्रियते? हठात् स्वामिमहाराजः स्वकक्षं दिव्यालोकेन समुद्भासितमपश्यत्, पुरतश्च स्वगुरुं श्रीपरमहंसदेवं शुष्कवदनं चिन्ताव्याकुलम्। मुखमण्डलं तस्य भर्त्सनाचिह्नितम्। तद्दिवसे न स्वामिमहाराजः "पाओहारीबाबा"-महोदयस्य गुहायां गन्तुं पारयामास। अनेन प्रकारेण न केवलं दिवसद्वयं त्रयं वा, परम् आवृत्तिरासीदस्य संघटनस्य सप्तविंशतिदिवसव्यापिनी। अनुशोचना-दावदग्धः स्वामिमहाराजो भूमौ लुठन् प्रतिशृणुते स्म—"न हि

नहि, नाहमन्यं कञ्चन गुरुपदे स्थापयितुम् अभिलषामि । भो ठक्कुर परमहंसदेव ! त्वमेव ममैकल आराध्य-देवः, अहं तव दासानुदासः ; दुर्बलतां मम क्षमस्व प्रभो ।

विदायदिवसे "पाओहारीबाबा" सकाशं गत्वा स्वामिमहाराजोऽपश्यत्तस्य गुहाप्राचीरे लम्बमानं श्रीरामकृष्णालेख्यमेकम् । पाओहारीबाबा श्रीरामकृष्णमुद्दिश्य श्रीस्वामिमहाराजं प्राह--'एष साक्षाद् भगवदवतारः' ।

महानासीत् स्वामिमहाराजस्य धिक्कार आत्मानं प्रति । को नामाहेतुकाविचारस्तेनानुष्ठितः स्वगुरुदेवं प्रति । चक्षुर्द्वयं तस्य अश्रुपूरभरितं बभूव ।

कियद्दिवसानन्तरम् अभेदानन्द-स्वामिमहोदयस्यास्वस्थतासंवादं प्राप्य स्वामिमहाराजो वाराणसीधाम प्रति प्रातिष्ठत, तत्र प्रख्यातपण्डित-श्रीप्रमदादासमित्रस्यातिथ्यं परिजग्राह स्वामिमहाराजः । प्रेमानन्द-स्वामिन्यभेदानन्दस्य चिकित्साभारं समर्पयामास स्वामिमहाराजः । सौभाग्यादभेदानन्दो रोगमुक्त आसीत् । किन्तु श्रीठक्कुरगृहिभक्तस्य बलरामवसु-महोदयस्य स्वर्गगमनवार्तां श्रुत्वा स्वामिमहाराजः परमव्यथितोऽचिरात् कलिकातां प्रत्याजगाम, तस्य शोकसन्तप्तपरिवारेभ्यः सान्त्वनाप्रदानाय ।

वारेऽस्मिन् श्रीस्वामिमहाराजः केवलं मासद्वयं मठमध्यवात्सीत् । श्रीठक्कुरस्यान्यतमगृहिशिष्यः सुरेन्द्रनाथमित्र-महोदयः मे-मासस्य पञ्चदशदिवसे स्वसाधनोचितधाम्नि प्रतिष्ठते स्म । वराहनगरमठस्यासावासीत् पृष्ठपोषकः । अथ तस्य तिरोधानाद् मठस्य संन्यासिनोऽभवन् भूयसा विपन्नाः । तत्संक्रान्तव्यापारेषु स्वामिमहाराज आसीत् सुतरां व्यग्रः । अथान्येद्युः पुनरपि भारतपर्यटनाय मनो दधत् आशीर्वादलाभाय घुषुडिग्रामस्थितां श्रीसारदाम्बिकां द्रष्टुं तत्रागच्छत् ।

(६) घुसुडिग्रामस्थितया श्रीसारदाम्बिकया सह स्वामिमहाराजस्य साक्षात्कारः ।

परमयोत्कण्ठया मातृसकाशे समुपस्थितः स्वामिमहाराजो मातरं श्रीसारदां भूयो भूयोऽभिवन्द्य प्राह—

**विफलमगलदेतज्जन्म मातर्मदीयं**
**त्वदभयपदयुग्मं यन्न दृष्टं कदापि ।**
**अधमसुतवितीर्णं कोटिशोऽद्य प्रणामं**
**सकृपमयि ! गृहीत्वा मां कृतार्थीकुरुष्व ॥ ४६**

भूयोऽपि स्वामिमहाराजो मात्रे निवेदयामास—

**आध्यात्मिकादि-बहुदुःखविमोक्षहेतु-**
**स्तातो ममाविरभवत् सुतसंग्रहार्थम् ।**
**माता पुनस्त्वमपि भाग्यवशात् सुतानां**
**संरक्षणाय विधिना प्रहिताऽसि भूमौ ॥ ४७**



श्रीसारदाजननी पुत्रमाशीर्भिर्वर्धयित्वा सोत्कण्ठं प्राह—"नरेन्द्र ! श्रीश्रीनाथस्य मम प्राणठकुरस्य धर्मो दर्शनं च विश्वस्य सर्वत्र भवतु प्रचारितम् । अहो कठोरो न्यासस्त्वयि मयि च विश्वस्य समुल्लास-प्रवर्धनाय । श्रीठकुरस्याभिलाषश्चिरं विजयताम्" ।

अथ प्रसङ्गक्रमेण गृहिभक्त-बलरामवसु-सुरेन्द्रनाथमित्रयोश्चिरविरह-मुपक्रम्य भाषमाणायां योगीनाम्न्यां श्रीस्वामिमहाराजो मातरमुद्दिश्य प्राह—"मम काशीस्थ-मित्रवर-श्रीप्रमदादासमित्र-महोदयोऽपि मां बल-रामवसु-महोदयस्य कृते रोदनपरं वीक्ष्य प्राह—"किमेतत् स्वामिमहो-दय ! संन्यासी भवान्; शोकार्तता भवति न युज्यते" । किन्तु मातरहं तस्मै इदं प्रत्युत्तरं दत्तवान्—

**संन्यासिनां हृदयनामक-वस्तु नास्ती-**
**त्येवं भवद्भिरपि चिन्तयितुं न युक्तम् ।**

संसार-भोगविमुखा अपि तत्त्वतस्ते
दुःखेन दुःखमुपयन्ति सदा परेषाम् ॥ ४८

विशेषेण, अयं बलरामवसु-महोदयो मे गुरुभ्राता । तस्य वियोगेन निश्चितमहं कातरो भवेयम् । प्रस्तरसदृशमनुभूतिहीनं संन्यासजीवनं न मे काङ्क्षितम् इति ।

जननी सारदामणिस्तद्वचनमाकर्ण्य परम-सन्तोषं प्रकाशयामास । ततः स्वामिमहाराजो जनन्यै स्वीयनिगूढाभिलाषं देशपर्यटन-पूर्वकं समग्रभारतपरिज्ञानात्मकं निवेदयामास । पुनश्च स्वामिमहाराजः प्राह—"मातः ! प्रार्थये, यावत्कालपर्यन्तं भगवतः श्रीगुरुदेवस्य धर्म-दर्शने विश्ववासिनां परिज्ञाते न करिष्ये, तावन्नाहं प्रत्यावर्तिष्ये । जगदम्बिके ! आशिषो देहि यथा मम सङ्कल्पः सिद्धिमाप्नुयात् ।" श्रीजननी प्राह—"तात ! श्रीमन्नाथस्तव मनोरथमवश्यमेव परिपूरयिष्यति" ।

(७) स्वामिमहाराजस्य निखिलभारत-परिक्रमणम् ।

(क) तत्रालोयार-भ्रमणात् प्राग्वृत्तान्तः ।

१८६० खीष्टाब्दीयो जुलाइ-मासः । स्वामिमहाराजः प्रथममगच्छद् भागलपुरं ततो देवगृहं वैद्यनाथधामापरनाम । देवगृहे ऋषि-राज-नारायणवसु-महोदयेन सहासीत् स्वामिनः साक्षात्कारः । तस्मात् स्वामिमहाराजो जगाम काशीं, तस्मादयोध्यां, ततो नैनीतालं ; तस्मात् केदारबदरीपथे प्राग्रेऽसरत् ।

एतदवसरे वराहनगरमठस्य बहवः संन्यासिनस्तीर्थभ्रमणार्थं निर्जग्मुः । केचन वा कठोर-तपस्यारता आसन् हृषीकेश-हरिद्वाराद्यञ्च-लेषु । कर्णप्रयागे गुरुभ्रातृ-स्वामितुरीयानन्देन सह स्वामिमहाराजस्य साक्षात्कारः समजनि । तत्र कुटीरं निर्माय तुरीयानन्दमहाराजः कठोर-तपस्यानिरत आसीत् ।

वारेऽस्मिन् अखण्डानन्द-स्वामिमहाशयः श्रीस्वामिमहाराजस्य

सहगाम्यासीत्। कर्णप्रयागे त्वखण्डानन्दमहाशयोऽस्वस्थतामाप। तस्मात्तौ देरादुनं प्रत्यागच्छताम्। स्वास्थ्यावाप्त्यनन्तरमखण्डानन्दस्वामी पुनरागच्छद् एलाहावादं, स्वामिमहाराजस्त्वगच्छद् हृषीकेशम्।

हृषीकेशवासः स्वामिमहोदयाय भृशमरोचत। माधुकरी-वृत्त्या क्षुन्निवृत्तिस्तस्याजायत। किन्तु आनन्दातिरेकोऽभूत् शास्त्रचर्चा-ध्यान-जप-तपःप्रभृतिभिः। एष आनन्दस्तु क्षणस्थायी आसीत्, यतः स्वामिमहोदयः ज्वर-डिप्थेरिया-रोगाक्रान्तो बभूव। उपशमाशा दूरवर्तिनीव प्रतिभाति स्म। एकदा स्वामिमहाराजस्य प्राणसंशये समुपस्थिते घर्मे निरन्तरप्रसृते नाड्याञ्च क्षीयमाणायां—

**अत्रान्तरे तत्र बभूव दृश्यः**
**कश्चिज्जटाजूटधरो यतीन्द्रः।**
**संबोध्य सर्वान् सुविषण्ण-दृष्टीन्**
**मा भैषुरित्याह स धीरवाचा॥ ४६**

ततः स स्व-वस्त्रस्थाल्याः (झुलि) किञ्चन भेषजं निष्काश्य स्वामि-महाराजं सेवयामास। सपद्येव स्वामिमहाराजस्य पुनरुज्जीवनावस्था समजायत। स क्षीणकण्ठेन अवदत्—"नाहं मरिष्यामि"। किन्तु निमेषाभ्यन्तरे संन्यासी कुत्राप्यन्तर्हितो बभूव। महतायासे-नापि नासौ पुनर्दृष्ट आसीत्। क्रमेण आरोग्यमासाद्य स्वामिमहा-राजः प्राह—अज्ञानावस्थोऽहमन्वभवं यन्मे कार्याणि विद्यन्ते बहूनि येषां समापनात् प्राग् न मम मृत्युर्विहित इति।

हृषीकेशतः स्वामिमहाराजो मीराटनगरमगच्छत् डक्टर-त्रैलोक्य-नाथघोषमहाशयस्यातिथ्यं स्वीचकार च। अथ श्रेष्ठिक-महोदयस्योद्यान उवास। अत्र च गुरुभ्रातॄणां परमसुन्दरं मेलनमभूत्—स्वामिब्रह्मानन्द-अखण्डानन्द-तुरीयानन्द-सारदानन्द-कृपानन्द-अद्वैतानन्दानाम्। तेन च श्रेष्ठिकोद्यानं वराहनगरमठ इव प्रतिभाति स्म। अविश्रान्तं प्रासरन् साधन-भजन-कीर्तनानि। सर्वेषामानन्दस्यात्रावधिर्नासीदिव। किन्तु

स्वामिमहाराज एकदा सर्वानाहूय प्रोवाच —"भ्रातरः ! समय आयातो मायारज्जुच्छेदनस्य। स्वस्वपथेषु प्राग्रेसरा भवत यूयम्, अहमपि एकाकी स्वकं पन्थानमनुसरिष्यामि"।

ततः स्वामिमहाराजो निःसङ्गः परिभ्रमितुमारेभे। "ताडिघाट"-समाख्य-वाष्पीययान-विरामस्थाने द्विप्रहरे भृशं क्षुत्पीडितः स्वामिमहाराजो मुमूर्षुरिव श्वासकष्टमन्वभवत्। न काकिण्यपि तस्य संबलमासीत्। गण्डूषमात्रं जलमपि दातुं न कोऽपि समुत्सेहे। इत्यवसरे कश्चन खाद्यभाण्डारिकस्तत्रागत्य तस्मै मिष्टान्नसंवलितसुखाद्यं पात्रमितशीतल-जलञ्च ददौ। खाद्यदाता कस्यचनान्वेषणे रत इव प्रतिभाति स्म। स्वामिमहाराजवदनं स निर्निमेषमवलोकयामास। स्वामिमहाराजमुद्दिश्य प्राह च —"भोजनेन मामनुगृह्णातु देवः"। विस्मयाविष्टः स्वामिमहाराजस्तमपृच्छत् "भ्रातः ! अस्मद्विषयकवृत्तान्तं कस्तत्र गोचरीभूतं कृतवान्" ? स प्राह, "देव ! शृणु। यथाऽन्येषु दिवसेषु, तथाऽद्यापि भोजनानन्तरं निद्रामाप्ते मयि स्वप्ने श्रीरामचन्द्रो मामभाषत— 'शकट-विरामस्थाने मम परमभक्तः क्षुत्पीडितो विषण्णः कातरश्चास्ते। तच्छीघ्रं खाद्यं पत्वा तस्य क्षुन्निवृत्तिमचिराद्विधेहि' इति। देव ! तत एवाहम् आगतः"। कृतज्ञतया स्वामिमहाराजस्याश्रुधारा गण्डस्थलं संप्लाव्य भूमौ पपात। अहो ! अचिन्तनीया कृपा जनन्याः सारदामणेः।

(ख) आलोयार-वृत्तान्तः।

१८९१ खीष्टाब्दस्य फेब्रुयारी-मासि स्वामिमहाराजो राजपुतानान्तर्गतालोयार-मण्डले समागच्छत्, पण्डित-शम्भुनाथमहोदयामन्त्रणक्रमेण तस्यैव गृहे वासमकल्पयच्च।

अत्र स्वामिमहाराजस्य भाषणमित्थं मनोरममभूद्यद् बहव एव तत्-समाकृष्टाः प्रतिदिवसं तत्र समागच्छन्। ते खलु समागताः प्रत्यहमेव प्रश्नान् कुर्वन्ति स्म स्वामिमहाराजसकाशे। स्वामिमहाराजोऽपि यथायथोत्तरदानेन सर्वान् सन्तोषयामास। एकदा स्वामिमहाराजं कश्चना-

पृच्छत् "स्वामिमहाराज! गैरिकवसनधारणे कथं भवतां प्रीतिर्जाता?" स्वामिमहाराजस्तदा धीरं प्राह—"शृणु। गैरिकवसनमेव भिक्षुकाणां वसनम्। यद्यहं साधारणजनवद्वस्त्रं परिदधामि, तदा भिक्षुकाः मामर्थवन्तं चिन्तयित्वाऽवश्यमेव भिक्षां याचिष्यन्ते। किन्तु मम हस्ते न विद्यते काकिण्यपि। यदि कोऽपि किमपि मां याचते, तद्दाने अहञ्च भवाम्यपारगः, तदाऽहं महद् दुःखमनुभवामि। तस्माद् गैरिकवसनधारमेव वरम्। कोऽपि मां भिक्षां न याचिष्यते, न च निराशोऽकारणं भविष्यति"। अहो गभीरा समवेदना स्वामिमहाराजस्य दरिद्रान् प्रति।

अथैकदा आलोयार-महाराज-"देवान्जी"-महाशयो महाराजं झटिति महासंन्यासिदर्शनायाऽऽगमनार्थमनुरुरोध। महाराज-मङ्गलसिंहोऽपि परेद्युः श्रीरामचन्द्रस्य गृहे संन्यासिदर्शनाय समागच्छत्। संन्यासिनं दृष्ट्वैव महाराजोऽचिन्तयत्—

**कोटिसूर्यसमुद्दीप्त – संन्यासिवेशमण्डनः।**
**राजते वीरसंन्यासी प्रतिभाभास्वरो महान्॥ ५०**

ततःस्वामिमहाराजं महाराजः प्राह-"श्रूयते किल संन्यासी त्वम् अद्वितीयः पण्डितधुरन्धरः, ततो बहुलार्थोपार्जनसमर्थोऽसि। तत्तुच्छीकृत्य कथं संन्यासिवेशधर इतस्ततः परिभ्रमसि?"

प्रत्युत्तरविधया स्वामिमहाराजः प्राह-"अहमपि भवन्तं पृच्छामि—

**विहाय कार्याणि नृपोचितानि**
**सहाङ्गलैस्त्वं मृगयाभिलाषी।**
**अटाट्यसे किं नियतं समन्ताद्**
**रसेन पानाशनयोः प्रमत्तः॥ ५१**

ततः सभासदः सर्वे चञ्चला इतस्ततोऽवलोकयन्ति स्म। महाराजस्तु सभासदां समक्षमेव तथाविधेन समुचित-प्रत्युत्तरेण क्रुद्धोऽपि क्षणं विचिन्त्य प्राह—'कथं तत् करोमीति नाहं वक्तुं समर्थोऽस्मि। तथापि

तन्मह्यं रोचते इत्यतस्तथा करोमि। स्वामिमहाराजोऽपि तत्क्षणात् प्राह—'अहो उत्तमम्! संन्यासिवेशेन परितो भ्रमणं मह्यं रोचते, ततोऽहमपि तथा करोमि'।

ततो महाराजः संन्यासिमहोदयं प्राह—'सर्वे मूर्तिपूजां कुर्वन्ति सत्यम्। किन्तु तस्यां नास्ति मे विश्वासः। तत् किं नु मे भविता?

स्वामिमहाराजः प्रथममचिन्तयदेतन्महाराजस्य परिहासवच इति। किन्तु महाराजस्तदभिप्रायं ज्ञात्वैव प्राह—'न हि स्वामिमहोदय, नहि। न मया परिहासः क्रियते। सत्यमेव नाहं सर्वसाधारणवत् काष्ठं मृत्तिकापिण्डं प्रस्तरं धातवपदार्थं वा पूजयितुं समर्थः। अपि तेन परजन्मनि ममाधोगतिः स्यात्?'

स्वामिमहाराजः पुरतो भित्तिगात्रोपरि लम्बमानं महाराजस्यालेख्यं प्रति दृष्टिं बद्ध्वा प्राह—'अहं वदामि, अस्मिन् आलेख्ये कश्चन निष्ठीवनक्षेपं करोतु'। किंकर्तव्यताविमूढो रामचन्द्रः प्राह—'स्वामिमहोदय! किमिदमुच्यते भवता?

आलेख्यमेतत् परमादृतस्य
महामहिम्नोऽस्य महीपतेर्नः।
अश्रद्दधाना इव तत् किमस्मिन्
निष्ठीवनं हन्त वयं क्षिपामः'॥ ५२

स्वामिमहाराजस्ततः प्राह—'किन्तु अस्यां प्रतिकृतौ न विद्यते महाराजः स्वयम्। केवलं वस्त्रखण्डमेतत्; तथापि कथमस्मिन् युष्माकमेतादृशी भीतिर्बहुमानश्च जायते। एवं प्रतिबोधितेष्वपि सभासद्वर्गेषु तथा कर्तुमस्वीकृतवत्सु स्वामिमहाराजो महाराजं मङ्गलसिंहमुद्दिश्य प्राह—

**येयं राजन् प्रतिकृतिरिह श्रीमतः प्राणहीना**
**तस्यामास्ते न तव रुधिरं नास्थि वा नापि चर्म।**

सत्यप्येवं भवदनुचरा आसनस्थे त्वयीव
श्रद्धां तस्यां दधति नितरां भीति-भक्तिप्रपुष्टाम्॥ ५३

ततो वस्तुतः किं नाम पार्थक्यं भवत आलेख्येन चैतेन सह।

भगवद्भक्ता अपि मूर्तिविशेषं भगवतः प्रतीकं मन्यन्ते। पश्यन्ति ते लीलाविशेषं भगवतो मूर्तिविशेष इति ध्रुवमेव। मूर्तिविशेषे भगवद्-दर्शनम् इत्येतदेव प्रतीकोपासनातत्त्वम्। अत एव,

धरातलेऽस्मिन् सुचिरं भ्रमित्वा
न कञ्चनाहं श्रुतवान् कदाचित्।
'दयस्व दारो! कृपणे मयी'ति
'शिले! भजे त्वामि'ति वा वदन्तम्॥ ५४

महाराज! तत् सत्यं जानीहि—सर्वेऽपि उपासते परब्रह्मसत्ताम्। ब्रह्म भक्तभावानुसारेण स्व-स्वरूपं व्यनक्ति। भक्ता धातुप्रस्तरमूर्तिं दृष्ट्वा स्मरन्ति चिन्मयेष्टदेवताम्; तत एव भक्ता मूर्तिं पूजयन्ति।

महाराज! अयमेव मम दर्शनप्रकारः। अन्येषां विषये कथमहं वक्तुं पारयामि?

ततो महाराजो मङ्गलसिंहः स्वामिमहाराजस्यासंदिग्धं वच उपदेशा-मृतं च निपीय तस्य वचसः सारवत्तां निर्णीय च स्वामिमहाराजस्य श्रीश्री चरणरेणुं शिरसाऽधारयत्।

(ग) आलोयार-परवर्ती लिम्बडि-गमनान्तो भ्रमणवृत्तान्तः।
जयपुरराज्यम्।

मीराट-मण्डलात् स्वामिमहाराजः एकाकी भारताटनवाञ्छया बहिराजगाम। अत्रान्तरे गुरुभ्रातुरखण्डानन्दस्य मनसि गुरुभ्रातृदर्श-नेच्छा बभूव बलवती। स्वामिमहाराजस्यानुसन्धानतत्परः स एकदा जयपुरधाम्नि तस्य दर्शनं लेभे। संन्यासिनोऽपि गुरुभ्रातृदर्शनलालसा मायालीलाप्रपञ्चान्तर्गता इति भाषमाणः स्वामिमहाराजस्तं तस्मात् स्थानात् स्थानान्तरं प्रेषयामास।

जयपुरस्थ-प्राचीनस्मृतिविमण्डित-स्थानानि पर्यवेक्षमाणः स्वामि-महाराजोऽवसरे तत्स्थानस्य विशिष्ट-वैयाकरणस्यान्तेवासी भूत्वा पाणिनि-व्याकरण-पठनाय विशेषेण मनो दधे। प्रथमसूत्रस्यायत्ती-करणे एव स्वामिमहोदयेन दिवसत्रयं व्ययितमिति दृष्ट्वा पण्डितमहोदयः प्राह—"मत्सकाशे भवतः पाणिनिशिक्षा न संभाव्यते खलु"। अतः परं नितरामेकाग्रचित्तः स्वामिमहाराजः पाणिनि-व्याकरणस्य जटिलानपि सर्वान् विषयान् तथायत्तीचकार, येन वैयाकरणमहोदयोऽवदत्—"योगि-पुरुषो भवान्, असम्भवसम्भावनं भवत आयत्तमेव"।

तपःप्रभावेन समेति साक्षा-
दतीन्द्रियो भावचयोऽपि यस्य।
तस्यैतदल्पं खलु शब्दशास्त्रं
स्फुरेत्तदेत्यत्र किमस्ति चित्रम् ॥ ५५

जयपुर-राज्यस्य प्रधान-सेनापतेर्हरसिंह-सर्दारमहोदयस्य नासी-न्मूर्तिपूजायां कश्चन विश्वासः। अथैकदा राजवर्त्मना गच्छति रथारूढे श्रीकृष्णविग्रहे शोभायात्रया गच्छन्तं सर्दारमहोदयं संस्पृश्य स्वामिमहा-राजः प्राह—"भगवतो जीवद्विग्रहं पश्यतु भवान्"। तेनैव महापुरुष-स्पर्शेन सर्दारमहोदयस्य भावान्तरं सुप्रकटमभूत्। गद्गदकण्ठेन सेना-पतिः प्राह—

स्वामिन् महाराज चिरं वितर्क्य
बोधो न मे यः समजायत प्राक्।
स्पर्शात्त्वदङ्गस्य तमद्य लब्ध्वा
पश्यामि साक्षादिव देवदेवम् ॥ ५६

एकदा जयपुर-राज्यस्य प्रख्यात-पण्डितः श्रीसूर्यनारायणः स्वामि-सन्दर्शनार्थमागतः प्रसङ्गक्रमेण प्राह—"वेदान्तविश्वासी अहं न विश्वसि-म्यवतारविषये। वयं सर्व एव ब्रह्म। अवतारेण सह कुत्र मम भेदः"

इति। स्वामिमहाराजो मनस्यचिन्तयत्—अस्य पण्डितप्रवरस्य गर्वस्य खर्वीकरणं काम्यमेव। ततः प्राह—"सत्यं तत्। किन्तु हिन्दवो मत्स्यं कच्छपं वराहञ्चाप्यवतारं मन्यन्ते, एषु भवान् कतमः ?" अथ हसत्सु सर्वेषु पण्डितमहोदयः परमलज्जितोऽधोवदनो बभूव।

आबुपर्वतः।

जयपुरादाजमीरदर्शनाय तत्र समागत आसीत् स्वामिमहाराजः। ततोऽगच्छदाबु-पर्वतम्। तस्मिन् पर्वते एकस्यां गुहायां स्वामिमहाराजो वसन्नासीत्। 'कोटा'-राजसभायाः कश्चन धर्मप्राणो महम्मदीय-व्यवहाराजीवस्तं स्वगृहं निनाय। अस्यैव महम्मदीय-व्यवहाराजीवस्य माध्यस्थ्येन स्वामिमहोदयस्य परिचयोऽभूत् 'कोटा'राज्यमन्त्रिणा फतेसिंह-महोदयेन खेतडिराज-सचिव-'मुन्सी'-जगन्मोहनेन च सह।

स्वल्पालापेनैव जगन्मोहनलालः स्वामिमहोदयं प्रति प्रकृष्ट-श्रद्धान्वितोऽजायत। जगन्मोहनमुखात् सर्वमवगत्य खेतडि-महाराजोऽपि तथाऽभूत्। खेतडिपतेरजितसिंहस्याग्रहातिशय्यात् स्वामिमहाराजस्तस्य प्रासादे गन्तुमैच्छत। राजाऽजितसिंह-महोदय आसीत् परमधर्मशीलो महानुभवश्च। स्वामिमहोदयस्य गभीरज्ञान-विश्लेषणशक्ति-सूक्ष्मदृष्टि-प्रभृतयो विशिष्टा गुणा महाराजं विशेषेण समाकृष्टवन्तः। अतः अजितसिंह-महोदयस्तस्य कर्मसचिवश्च स्वामिमहाराजस्य शिष्यत्वं परिजगृहतुः। अजितसिंहमहोदयस्य पुत्रप्राप्तये आसीन्महती आकाङ्क्षा। गुरुदेवस्याशीर्वादेन महाराजः प्राप पुत्ररत्नमेकं काले।

अस्मात् स्थानात् स्वामिमहाराजः समागच्छत् आहमेदाबाद-नगरम्। अस्माज्जगाम लिम्बडिपुरं प्रति। स्थानेऽस्मिन् कतिचन भण्डसाधवो न्यवसन्। ते तु स्वामिमहोदयं मिष्टवाक्यैस्तोषयित्वा विपदि पातयितुं विविधां चेष्टामकार्षुः। मध्यरात्रे नारी-समागमसूचनामनुभूय स्वामिमहाराजो यदा स्थानान्तरं गन्तुं प्रावर्तत, तदा तस्य गृहद्वारमर्गलबद्धम् अपश्यत्। ततो गभीरध्यानेन मातुः सारदामणेः कृपाभिक्षां

ययाचे । इतोमध्ये केचन वामाचार-संन्यासिनस्तं ब्रह्मचर्यविरोधिना विपर्यविशेषेण योजयितुमैच्छन् । स्वभावतस्तथा कर्तुमसम्मते स्वामिमहाराजे ते तं प्राणभयं प्रादर्शयन् । ततस्तस्मै चिन्तनावसरं दत्वा ते वामाचार-संन्यासिनस्तस्मात् स्थानाद् बहिर्गताः । स्वामिमहाराजस्तदानीमेवमचिन्तयत्—

भवतु यदिह भावि ब्रह्मचर्यं धनं मे
कथमपि न जहामीत्येष मे निश्चयोऽद्य ।
अयि जननि विपन्नं सारदे रक्ष पुत्रं
जनय मनसि शक्तिं सत्यमार्गे प्रयाणे ॥ ५७

इतोमध्ये जनन्या दूत इव कश्चन बालकस्तत्र समागत्य स्वामिमहोदयं प्राह, "अपि तव कञ्चनोपकारं कर्तुमर्हामि ?" स्वामिमहाराजः प्राह, "बाढम्, लिम्बडिमहाराजस्य सकाशे ममावस्थां निवेदय, यथाऽसौ मम समुद्धारं विदध्यात्" । बालकश्चाह—"देव ! निश्चितमहं तथा करिष्ये"। ततो बालकाद्विदितवृत्तान्तो राजा राजपुरुषान् प्रेषयन् स्वामिमहाराजस्य समुद्धारं साधयामास ।

(घ) आकन्याकुमारिकं स्वामिमहोदयस्य भ्रमणम् ।

लिम्बडिनगरात् स्वामिमहाराजो जगाम जुनागडम्; तस्माच्च प्रभासं सोमनाथमन्दिरधन्यम् । ततः पोरवन्दरम् । एकदा पोरवन्दरे भिक्षापात्रकरः स्वामिमहाराज इतस्ततः परिभ्रमणं कुर्वन् स्वशिष्यं लिम्बडिमहाराजमपश्यत् । लिम्बड़ि-महाराजो महोत्साहेन भक्तिपुष्पार्घ्यं निवेदयन् तं स्वगृहमनैषीत् । पोरबन्दरे स्वामिमहाराजः सप्ताष्टमासानवात्सीत् । तत्र बहुभिस्तत्त्वान्वेषिभिः साधुभिः पण्डितवर्यैश्च तस्य साक्षात्कारः समजनि । गोवर्धन-मठाधीशो जगद्गुरु-श्रीशङ्कराचार्यस्तस्मिन् समये पोरबन्दर एवासीत् । स्वामिमहोदयस्य पाण्डित्येन चरमाध्यात्मिकोन्नतिपरिचयलाभेन चासौ मुग्धो बभूव ।

पोरबन्दरस्य प्रख्यात-पण्डित-प्रवरः श्रीशङ्करपाण्डुरङ्ग-पराव-महोदयः

स्वामिमहोदयस्य गुणराशिं विज्ञाय नितरां विस्मयाभिभूतो बभूव। धर्म-ज्ञानस्यानन्तभाण्डारमेतादृशं नरवपुर्न तस्य चक्षुर्युगलमितः पूर्वं धन्य-मकरोत्। अहो बुद्धेः प्राखर्यं बलिष्ठा विचारपद्धतिरगाधं शास्त्रज्ञानञ्च ! सर्वेषां गुणानामेकत्र समावेश इव श्रीस्वामिमहाराजस्तस्मै प्रतिभाति स्म। स एव प्राथम्येन स्वामिमहोदयं प्राह—

"स्वामिराज ! भवताम् उदारमहाभावान् नैतद्देशीया अनायासं परिग्रहीतुं समर्था भविष्यन्ति। ततो भवान् पाश्चात्यदेशं गच्छतु। पाश्चात्यदेशीया जानन्ति किल केनोपायेन गुणिजनाय सम्मानं देयम्। पाश्चात्यशिक्षासभ्यतया प्राच्यसनातनधर्मज्ञानस्य समन्वयेन जगति युगान्तरं समागमिष्यति। तस्य युगान्तरस्याऽऽविर्भावश्च भविष्यति भवन्माध्यमेन। मदीयः प्रस्तावोऽयं भवता चिन्तनीय" इति।

ततः स्वामिमहोदयः क्षणं मौनमवलम्ब्य सविनयं प्राह—प्रभासे समुद्रसैकते दण्डायमानोऽहमेकदा समुद्रस्यानन्तवीचिविक्षोभं दृष्ट्वा-ऽचिन्तयम् अहो ! निश्चितमेव वीचिविक्षुब्धस्य समुद्रस्य परपारे मया गन्तव्यम्। किन्तु केनोपायेन, कदा, कुतो वा—तत्तद्विषयेषु किमपि नाहं जाने।

स्वामिमहोदयस्य पोरबन्दरावस्थानसमये एव गुरुभ्राता त्रिगुणातीत-स्वामी एकदाऽचिन्तित एव तत्र समाजगाम। तस्य लक्ष्यस्थानमासीत् हिंलाज-तीर्थं, सङ्गिनश्चासन्नन्ये कतिचन संन्यासिनः। पोरबन्दरे कस्यचन आंग्लभाषाज्ञान-समृद्धस्य महासाधोरुपस्थितिं श्रुत्वाऽसौ "निश्चितमेवायं गुरुभ्राता स्वामिमहाराजः स्यादि"ति मन्यमानस्तत्सकाशं जगाम। अहो महानानन्दः स्वामित्रिगुणातीतस्य, एवमचिन्तितोप-स्थितेन गुरुभ्रातुर्दर्शनेन। अत्रैकदा स्वामिमहाराजस्त्रिगुणातीतं प्राह—

वाकोवाक्यावकाशे मम खलु विषये यद्यदाख्यद् गुरुर्मे
आस्मीन्मे तेन हासो न च पुनरभवत् प्रत्ययो मात्रयाऽपि।
दैवे याते द्युलोकं गतवति च दिने भूयसि प्राप्तबोधः
सोऽहं जानामि सत्यां तदखिलभणितिं श्रीगुरोस्तथ्यवाचः ॥ ५८

अधुनाऽहं मन्ये—या शक्तिर्ममास्ति, तस्याः साहाय्येन जगदिदं कक्षच्युतं कर्तुमहं शक्नोमि इति।

(ङ) द्वारका-माण्डवी-खाण्डोयाभ्रमणम्।

पोरबन्दरात् स्वामिमहाराजोऽगच्छद् द्वारकाम्। ततो माण्डवीं ततोऽन्यानि समीपवर्तिस्थानानि च स पर्यभ्रमत्, अथ वरदां तदनन्तरं खाण्डोयां च। खाण्डोयानामकस्थान एव स्वामिमहाराजः प्रथममश्रृणोद्यत् आमेरिकास्थ-चिकागोनगरे विश्वस्य सर्वधर्माणां प्रतिनिधीनां सम्मेलनमेकं भविता। संवादः केवलं श्रुतः, किन्तु तत्र गमनोपायादिकं स्वामिमहाराजो न तदानीं चिन्तयामास। कोऽजानादस्यैव विश्वधर्मसम्मेलनस्याप्रतिद्वन्द्विनेतृरूपेण स्वामिमहाराजो हिन्दुधर्मस्य विजयपताकां निखिलविश्वे समुड्डीयमानां करिष्यति, भारतवर्षं च विजयमहिम्ना विश्वस्याध्यात्मिक-श्रेष्ठस्थानरूपेण प्रख्यातं भविष्यतीति।

(च) मुम्बइ-पुना-महाबालेश्वर-मारमार्गोया-विल्वग्राम (बेलगाँव)—भ्रमणम्।

१८९२ खीष्टाब्दस्य सेप्टेम्बरमासः। मुम्बइनगर्याः श्रेष्ठि-रामदासछबिलालदासस्यातिथ्यं परिगृह्य स्वामिमहाराजः पुनां प्रति गच्छति स्म। स्वामिमहोदयस्य सहगामिन आसन् त्रयो महाराष्ट्रयुवकाः। तेषां महान् वितर्कः समजनि संन्यास-संन्यासिविषयसम्पर्की।

तेषां युवकद्वयमित्थं प्रतिपादयितुमयतत यत् संन्यासः केवलमर्थहीनाडम्बर एव, कर्महीनतायाः कपटाचारस्य च निर्लज्जाधारस्वरूपोऽयं संन्यासः। संन्यासिन एव भारतवर्षस्य सर्वविध-दुर्गतेर्मुख्यकारणमिति।

तृतीय-युवकस्तु प्रमाणयितुमियेष यदेते एव संन्यासिनो भारते सर्वकल्याणस्यादिकारणम्। एतेषां श्रद्धया सेवया प्रयत्नेन च भारतीयसभ्यता युगयुगान्तरीयं तमोऽतिक्रम्य सामग्रिककृष्टौ आत्मप्रकाशं चकार।

कृष्टाग्नेरनिर्वाणशिखां संन्यासिन एव ररक्षुः स्वपक्षपुटैः धर्मान्तरसंघात-प्रभञ्जनभीमप्रकोपेऽपि। संन्यासो न केवलं गौरववस्तु भारतस्य, परन्तु असावेव भारतीय-मर्मवाणी। सोऽयं तृतीयो युवकः स्वनामधन्यो बालगङ्गाधरतिलक-महाशयः।

एतावत्कालपर्यन्तमेतेषां वितर्कं श्रुत्वा स्वामिमहाराजो बालगङ्गा-धरतिलक-महोदयस्य पक्षमाश्रित्य ओजस्विन्या आंग्लभाषया भारतीय-संन्यासधर्मस्य महिमानं प्रोद्घोषयितुं यतते स्म। अहो तदानीन्तना-रक्तिममुखमण्डलस्य चक्षुर्द्वयस्य दीप्त-वह्निशिखा स्वामिमहाराजस्य। स्वामिमहाराजस्य वाङ्महिम्ना विरोधियुवकौ अवनमित-वदनावास्ताम्। श्रीतिलकमहोदयः स्वामिमहाराजं स्वगृहे परमादरेण नीतवान्। तिलक-महाराजस्य प्रतिभा वेदादिज्ञानञ्च स्वामिमहाराजस्य परमप्रीति-कारणमभूत्।

पुनातः 'वेलगाँव' स्थानं गतवान् स्वामिमहाराजः। तत्र परमसौम्य-दर्शनं ज्योतिर्मयदेहं संन्यासिनं तं दृष्ट्वा अरण्यविभागादेक्षकः श्रीहरिपद-मित्र-महाशयः परमं मोदमवाप। सस्त्रीक-हरिपदमित्र-महाशयः स्वामि-महाराजस्य दीक्षितशिष्यो बभूव। स्थानान्तरे गमनेच्छुं गुरुदेवं न किमपि वस्तु ग्राहयितुं शशाक श्रीमित्रमहाशयः केवलं यष्टिखण्डं विना। संन्यासिनोऽर्थेन किम्?

पुनः कोल्हापुरराज्ञी-महोदया अलोकसामान्य-निर्लोभ-संन्यासि-महोदयाय प्रचुरार्थोपहारं दातुं प्रयतते स्म। अस्वीकृतवति स्वामिमहो-दये राज्ञी स्वल्पमपि उपहारं ग्राहयितुमतीवाकूतिपरायणा बभूव। सर्व-विषयाशयशून्योऽपि राज्ञीमहोदयाया अत्यधिकानुरोधपरवशः संन्यासि-महाराजः केवलं गैरिकवस्त्रखण्डमेकमग्रहीत्।

महीशूर-मण्डलम्

वेलगाँव-स्थानादगमत् श्रीस्वामी महीशूरम्। सौभाग्यान्महीशूर-देवान-बाहादुर-श्रीशेषाद्रि-महाशयेन सार्धं स्वामिमहाराजस्य परममैत्री

समघटत । प्रथमदर्शनेनैव शेषाद्रि-महाशयस्य बोधोऽजायत यत् संन्यासिमहोदय एकमनर्घ्यं रत्नमिति। महीशूरमहाराजः श्रीचामराजेन्द्र ओयाडियामहोदयोऽपि संन्यासिमहाराजस्याशेषगरिम्णा परं समाकृष्ट आसीत्।

स्वामिमहाराजस्तु महाराजस्य कदाचित् कस्मिंश्चिज् जायमाने अपचारे तं सर्वजनसमक्षमेव भर्त्सयामास। तेन महाराजः स्वामिमहाराजं प्रार्थयामास यथा तेनाप्रियसत्यं राजसभायां महाराजमधिकृत्य नोच्येतेति। तदाकर्ण्य स्वामिमहाराजे रुष्टे जाते महीशूरमहाराजोऽधिकतरं तुष्टो बभूव। यः संन्यासी स कथं महाराजस्य रोषं गणयेत् ?

कामं वैषयिकाः समीहितफलप्राप्त्याशया प्रेरिता
आढ्यानां हृदयानुवर्तनविधौ सन्तून्मुखाः सर्वदा ।
ये चित्तं विषमाकलय्य दधते सर्वत्र निष्कामतां
ते कुर्युर्नृपतेर्मनोऽनुसरणं किं साधु-संन्यासिनः ॥ ५६

एकदा महाराजस्य सभायां वेदान्तविषयक-विचारः देवान-बाहादुरस्याध्यक्ष्येण समघटत। विपुलतर्क-प्रभञ्जनः सर्वं सभास्थानं विलोडयामास। सर्वे पण्डिताः स्व-स्व-मतसमर्थनार्थं बद्धपरिकरा बभूवुः। अन्यमतानां निन्दाऽपि तेषामासीदीप्सिता । ईदृशे व्यतिकरे काचन मीमांसा न सम्भवपरासीत् ।

देवान-बाहादुरस्तु स्वामिमहाराजं वेदान्तविषयक-विचारेऽशग्रहणायानुरुरोध। सभ्य-नक्षत्रमण्डिते पूर्वाशाप्रान्तदेशे इव नृपसदसि नवोदितारुणसमः स्वामिमहाराजो मञ्चस्योपरि दण्डायमानश्चतुर्दिशम् अवलोकयामास। सर्वेषां चक्षूंषि स्वामिमहाराजवदनकमलोपरि निपेतुः। सुललितसरलसंस्कृतभाषया भाषणं ददौ श्रील-स्वामिमहाराजः। सर्वेषां संशयो बहुदूरमगात्। सप्रमाणं स्वामिमहाराजः प्राह—

नान्योन्यस्य विरोधितां विदधते वेदान्तवाचोऽमला
यद् भेदस्फुरणं तदस्ति सुतरामापातदृष्ट्यागतम् ।

मन्ये साधनभूमिका-स्तरवशाद् भेदोऽनुभूतौ भवेत्
तद्धेतोरुपजायते च विमतिर्वेदान्तवाक्येऽपि नः ॥ ६०

एकदा महीशूरराजस्य प्रधान-मन्त्रिमहोदयः स्वामिमहोदयेन साकं हट्टस्थानं गत्वा तस्मै कञ्चनोपहारं प्रदातुमभिलाषं विज्ञापयामास । बहुमूल्यः स्यादयमुपहार इत्यासीदभिप्रायः प्रधान-मन्त्रिमहाशयस्य । तदर्थम् अर्थपत्रमपि (चेक्) तेन नीतम् । स्वामिमहाराजो विपणेर्विपण्यन्तरमगच्छत्, अपश्यच्च बहूनि द्रव्याणि । न तु कस्मैचन द्रव्याय स्पृहयामास यद् उपहारीकृत्य कृतकृत्यः स्यात् प्रधानसचिवः । अन्ततश्च मृदु विहस्य स्वामिमहाराजः प्राह, "यद्यास्ते मह्यमुपहारदाने भवतामानन्दस्तर्हि धूम्रयष्टिमेकां सानुग्रहं देहि ।" निर्वाक् प्रधानमन्त्रिमहाशयोऽचिन्तयत्—"अहो ! एतदर्थमानीतम् अर्थपत्रम् !" ।

परिव्राजकस्य स्वामिमहोदयस्य कस्मिंश्चित् स्थाने दीर्घकालावस्थितिर्नासीत् सम्भवपरा । तत एकदा महीशूर-महाराजाय तस्य प्रधानमन्त्रिणे च स्वाभिलाषं विज्ञापयामास । महाराजस्तमपृच्छत्—"अपि किमपि प्रियं भवतः कर्तुं पारयामि ? पारयेयं चेत् सर्वथा कृतकृत्यः स्याम् ।"

निखिल-भारतपरिभ्रमणरतस्य स्वामिमहोदयस्य मनसि तदैकैव चिन्ता—कथमीदृश-दरिद्रदेशस्यातिविषमो दारिद्र्यदावो निर्वापणीयः स्यात् ? अनशनक्लिष्टानां कोटि-कोटि-भारतवासिनां मलिनवदनच्छविस्तदा स्वामिमहोदयमाकुलीचकारेति हेतोः स्वामिमहोदयस्तत्क्षणात् प्राह–"महाराज ! अस्माकं वर्तमान-प्रयोजनं पाश्चात्यविज्ञानसाहाय्येन भारतवर्षस्यार्थिकोन्नतिसाधनम् । किन्तु तदर्थम् इउरोपवासिसकाशे कृपाभिक्षया अविरलाश्रुवर्षणेनापि न कोऽपि फलोदयो भवेत् । वैज्ञानिक-पद्धत्या कृषिशिल्पाद्युन्नयनशिक्षा तेभ्योऽस्माभिरवश्यं ग्रहणीया । विनिमयेनास्माभिरपि धर्मशिक्षादानमाध्यमेन तेभ्यः किञ्चित् प्रत्यर्पणीयमेव । दरिद्रा वयम् आध्यात्मिक-धनदानेन विना किमन्यद् दद्मः ? ततो वाञ्छामि किल वेदान्तधर्मप्रचाराय पाश्चात्त्यदेशमहं गन्तुम् । यथा-

ऽस्मिन्नादान-प्रदानविषये वयं सार्थककामा भवेम तदर्थं सर्वैरेव भारत-वासिभिः स्वदेशकल्याणकामिभिरवश्यमेव प्रयतनीयम् । महाराज ! महत्यस्मिन् देशहितसाधनव्रते भवान् मम सहायो भवतु" ।

परमानन्दितो महाराजस्तस्मिन् क्षणे बहुसहस्रमुद्रा हस्तान्तरीकर्तु-मैच्छत् , सर्व एव व्ययभारो राजकोषस्येति महाराजः स्वयमघोषयच्च । किन्तु स्वामिमहाराजः प्राह—"नाहमधुनाऽपि तद्विषयकं संकल्पं दृढी-कृतवान् । पारिव्राज्यस्यावसनात् प्राक् नाहं कार्यान्तरे मनोनिवेशं कुर्याम्" ।

स्वामिमहाराजस्य महीशूरपरित्यागात् प्राक् श्रीमहाराज-ओयाडियार महोदयो बहुमूल्योपहारदानायाभ्यलषत् । बहुधाऽनुरुध्यमानः कृपालुः स्वामिमहाराजो धातुसम्बन्धविहीनं केवलं चन्दनकाष्ठनिर्मितं ताम्रकूट-सेवनपात्रमुपहाररूपेण परिजग्राह । देवानबाहादुरस्तस्य वस्त्रकोशाभ्यन्तरे बहुमुद्राः स्थापयितुं प्रायतत ; किन्तु स्वामिमहाराजस्य तत्रापि कठोरा-सम्मतिरासीत् । तेन च देवानबाहादुरस्य वदनं दुःखमलिनमभूदिति विलोक्य स्वामिमहाराजः प्राह—"एवं चेत् कोचिनपर्यन्तं बाष्पीय-शकटस्य द्वितीयश्रेणी-शुल्कपत्रमेकं मदर्थं संग्रहणीयं भवता" इति ।

त्रिचूडाख्य-कोचिनराजधान्यां स्वामिमहाराजः कतिचन दिवसा-नयापयत् विपुलानन्देन । ततोऽगच्छत् त्रिवाङ्कुर-राजधानीं त्रिवेन्द्राम-धाम । रमणीयः खलु मालाबार-प्रदेशः—

क्षेत्रैः श्यामलशस्यपंक्तिनिचितैश्छन्नो दिगन्तायतैः
स्निग्धप्रोन्नत-भूरिभेद-तरुभिर्व्याप्तो वनस्थानकैः ।
श्रेणीबद्ध-शिरोभिरावृतवियद् यो नारिकेलद्रुमै-
र्मालाबारसमाह्वयः स रुचिरो देशोऽयमग्र्यः क्षितौ ॥ ६१

ततो मादुरामगच्छत् स्वामिमहाराजः परमानन्दमलभत च मीनाक्षी-देवीमन्दिरदर्शनेन । अत्रैव स्वामिमहाराजेन सह परिचयोऽघटत 'राम-नाद'राज-भास्करवर्म-सेतुपतिमहोदयस्य । अहो बहुजन्म-पुण्यफलाल्लब्ध

ईदृशो महात्मेति मन्यमानो राजा भास्करवर्मा स्वामिमहोदयं सकरुणं शिष्यत्वमयाचत।

अत्रापि प्रचुरार्थं दातुकामाय भास्करवर्मणे महाराजाय स्वामिमहाराजः प्राह—"संन्यासिने मह्यं किं वा भवतो देयं स्यात्? ममेच्छा, महाराजः प्रजानां प्रकृतकल्याणसाधनाय शिक्षाविस्तार-कृषिशिल्पादिवर्धनार्थं प्रयत्नपरो भवेत्। तदेव मह्यं महाराजस्य श्रेष्ठोपहारदानं स्यात्।

मोक्षलाभः संन्यासिनो लक्ष्यं सत्यम्; किन्तु कोटिकोटिभारतवर्षीयाणामनारतदुःखक्लेशदूरीकरणमेवाभीप्सितमासीत् श्रीगुरुदेव-परमहंसस्य। तस्मात्तदेव मम जीवनस्य व्रतम्।

मोक्षोऽस्ति यो निखिलदुःखनिवृत्तिरूपः
काम्यः स चेत् स्व-परभेदमृते हि काम्यः।
दुःखाब्धिमग्न-मनुजान् निखिलानुपेक्ष्य
मोक्षं य इच्छति निजं स जनो जघन्यः॥ ६२

मादुरायां कतिचन दिवसान् यापयित्वा स्वामिमहाराजो रामेश्वर-सेतुबन्धं जगाम। रामेश्वर-मण्डलं दक्षिणभारतीय-वाराणसीति कथ्यते। रामेश्वरे विद्यते श्रीरामचन्द्र-प्रतिष्ठितः शिवः, बहूनि मन्दिराणि च। ततः स्वामिमहाराजः प्रससार भारतस्य सर्वदक्षिणप्रान्तबिन्दु-कन्याकुमारिकां प्रति। श्रीकन्याकुमारिकामन्दिरे स्वामिमहोदयः पूजादिकं चकार यथाशास्त्रम्। अथ मन्दिरान्नातिदूरे प्रस्तरखण्डे एकस्मिन् स्वामिमहाराज उपविश्य भारतवर्षस्याशेषदुर्दशाविषयं चिन्तयित्वा दुःखाभिभूतो बभूव।

मृन्मयीं मातरं भारतभूमिं दृष्ट्वा दृष्ट्वा स्वामिमहाराजो भारत-मातुश्चिन्मयरूपमपि पूर्णं ददर्श। ततश्चिन्तयामास—"महादेशसदृशी अतुलविभूतिमयी जननी भारतभूमिरेकदासीत् सर्व-धर्म-दर्शन-विज्ञान-कलादिज्ञानसारा। अद्य तु, एकतः शतसहस्रं निरन्न-दीन-भारत-वासिनः अश्रूणि निःसार्य कठोरतम-दारिद्र्यसंपीडिता बुभुक्षामूर्छितान्

सन्तानान् अन्नहीनान् मृत्युमुखपतितानपि रक्षितुमसमर्था रोरुद्यन्ते। अन्यतरतु—प्रबलविलासोन्मत्ताः क्षमतामदगर्विता धनिनो निर्धनान् निष्पिष्य निष्पिष्य स्वविलासतृष्णां परितर्पयन्ति।

शिक्षादीक्षाहीना अन्त्यजा वर्णोत्तमसम्प्रदायस्य निष्ठुरव्यवहारदीर्णाः सनातनधर्मं प्रति जाता वीतश्रद्धाः। हिन्दुधर्ममनादृत्य बह्वो जनाः कुर्वन्ति च धर्मान्तरग्रहणम्। उच्चशिक्षाभिमानिनः स्वार्थान्धा ग्रामवासिनः स्वजनानपि परित्यज्य पत्नीमात्रसारा अभारतीय-जीवनानि स्वीकुर्वन्तः अधीरमश्लाघ्यं निर्ममतमं कालमतिवाहयन्ति। इत्थमेव ते हिन्दुधर्म-पूतशिरसि अभिशापाग्निगोलिकां क्षिपन्ति।

> निरर्थानुष्ठानं विदधति जना धर्मविधया
> क्रमाल्लुप्तो देशादधिगतफलो वैदिकविधिः।
> कुसंस्काराच्छन्नं विकृतचरितं भारतमभूत्
> तदेतद्धर्मीयं वहति किल कङ्कालमधुना ॥ ६३

पुनरपि दीर्घं निःश्वस्य स्वामिमहाराजोऽचिन्तयत्—श्रीगुरुदेवो मामकथयत्—शून्योदरे धर्मो न शोभते। स्थूलतण्डुलवस्त्राणां प्रयोजन-मनिवार्यमेव। शून्योदरेभ्यो धर्मोपदेशदानं निरर्थकमिति। अद्य भारतीयानामवश्यप्रयोजनं शिक्षायाः प्रसारस्य, अन्नवस्त्र-संस्थानस्य च। किन्तु निष्कपर्दकः संन्यासी त्वहं कथं तत् कुर्याम्? अत्र प्रथमं प्रयोजनं सत्यपरायणश्रमकुशल-मानवानां द्वितीयञ्च अर्थस्य।"

किन्तु कुतोऽर्थो मिलिष्यन्ति? यदि केवलं स्यां भारतवर्षस्य मुखा-पेक्षी, निरर्थकं समयो मे यास्यति। विस्तीर्ण-नीलसागरराशिं समुत्तीर्य यास्याम्यहं भारतीयानां पक्षतः पाश्चात्यदेशमेतेषां कृते सहायताभिक्षार्थम्। यदि विजयी भवामि, तदा स्वदेशं प्रत्यागमिष्यामि; अन्यथा मरणं मम भवतु प्रयत्नावसरेऽस्मिन्; का क्षतिः?

अथ स्वामिमहाराजः श्रीठकुरस्य जनन्याः सारदामणेश्च नामनी स्मारं स्मारं दृढसङ्कल्पं चकार—"श्रीश्रीगुरुदेवस्य आशीर्वादैः कर्यभार-

मिममहं प्रहीष्ये। भगवतो गुरुदेवस्येच्छया अदूरभविष्यति भारतवर्षस्य प्रतिनगरं प्रतिग्रामं तथाविधा नरा नार्यश्च सहस्रशो जन्म लप्स्यन्ते, ये गतानुगतिकतया न भविष्यन्ति स्वार्थपरायणाः, न वा धाविष्यन्ति भोग-लालसा-परायणा इतस्ततः, परन्तु नरनारायणसेवायै सर्वस्वं समर्प्य महायुगचक्र-विवर्तनसहायका भविष्यन्ति।

हे देव! देहि मे शक्तिं दुर्जयाम्; अवश्यमेवाहं विजयी भवेयम्।

**धारिणि जननि एहि।**

**उत्तालसागरे तिरोभूतपारे तारणतरणि एहि॥ ६४**

(छ) कुमारिकातः पुनर्भारताभिमुखपर्यटनम्।

कुमारिकातः पर्यटनक्रमेण स्वामिमहाराजः समागच्छत् पन्दिचेरीम्। अनुरागिणः कतिचन युवकानुद्दिश्यात्र स्वामिमहाराजः प्राह—

**शिक्षादीक्षाविहीनेष्ववरजनसमाजेषु शिक्षाप्रसारः**
**सर्वाङ्गोपेत-सर्वाभ्युदयघटनया मोचनं दुर्गतानाम्।**
**देशाधःपातहेतोर्झटिति निरसनं जातिभेदप्रथाया**
**एवंप्राया समेषां भवतु हितकरी कर्मधाराऽद्य यूनाम्॥ ६५**

अस्यामेव पन्दिचेरीनगर्यां दैवात् मद्राज-डेपुटि-एकाउन्टेन्ट्-जेनारेल् मन्मथनाथ-भट्टाचार्य-महोदयेन सह स्वामिमहाराजस्य पुनरपि साक्षात्कारः समजनि। प्रथमसाक्षात्कारस्तु तयोः समघटत त्रिवेन्द्रामाञ्चल एव। एष मन्मथनाथ-भट्टाचार्य-महाशयः स्वामिमहोदयस्य परमानुरागी तं माद्राजनगर्यामानिनाय। स्वल्पदिवसाभ्यन्तरे स्वामि-महाराजस्य प्रतिभा-पाण्डित्यख्यातिर्माद्राजस्य सर्वत्र सम्प्राचरत्। विश्व-विद्यालयस्य कतिनश्छात्रा बहवोऽध्यापकाश्च स्वामिमहाराजसकाश-मायान्ति स्म धर्म-दर्शनादिपर्यालोचनाय। कतिचनाध्यापकाः पुनः पाश्चात्त्य-दर्शनयुक्तिजालं प्रपञ्चेन विस्तार्य सर्वथा पराजिताः स्वामि-महोदयस्य शिष्यत्वं भेजिरे।

माद्राज-ख्रीष्टियान्-कलेजस्य प्रख्याताध्यापकः नास्तिक-सिङ्गार-

मेलु-मुदलियर-महोदयः। अनेकेषाम् उच्चशिक्षितानां स्वामिमहाराजस्य शिष्यत्वग्रहणात् मुदलियर-महोदयो विस्मयापन्न आसीत्। परं स मनस्येवमकरोत्—

एनं पराभूय विचारमार्गे
स्वयं समासादितसिद्धभावम्।
धर्मस्य काषायपटस्य चास्य
प्रमापयिष्यामि निरर्थकत्वम्॥ ६६

तर्के तु पराभवं स्वीकृत्य मुदलियर-महोदयः स्वयमेव स्वामिमहाराजस्य शिष्यत्वं परिजग्राह।

चिरायाहङ्कारः सपदि विलयं तस्य गतवान्
अविश्रान्ता धारा व्यगलदपि नेत्रान्तयुगलात्।
तया स्रोतःश्रेण्या सुचिरनिचितं चित्तकुहरे
विधौतं निःशेषं मुदलियरनास्तिक्य-कलुषम्॥ ६७

पश्चादेष मुदलियर-महोदयो गुरुभक्तेः परां काष्ठां स्वजीवने प्रदर्शयामास। स्वामिमहाराजोऽपि नवीन-शिष्येऽस्मिन् पूर्णं स्निह्यति स्म। परमादरेण स्वामिमहाराजः तं 'कि डि'-सम्बोधनेन नन्दयामास। अतः पश्चादेष मुदलियरः 'प्रबुद्धभारत'-पत्रिकायाः परिचालनरतः संसारधर्मं विसृज्य नर-नारायण-सेवाव्रतपरो बभूव।

'चिकागो'-महासम्मेलनसमयो निकटवर्ती आसीत्। स्वामिमहाराजस्याभिलाषः—तस्यां धर्मसभायां सनातन-हिन्दुधर्म-प्रतिनिधित्वं तेनैव करणीयमिति। अस्मिन् विषये माद्राजवासि-शिष्या अपि परमसमुत्साहिनोऽराजन्त। अचिरेण ते गुरुदेवस्य साहायकविधानार्थं पञ्चशत-मुद्रा अपि संजगृहिरे।

अतः परमेव स्वामिमहाराजस्य चित्ते द्विधाभावोऽजायत—"सत्यं गुरुभारस्य वहने सामर्थ्यं ममास्ति न वा"। ततः शिष्यजनेभ्यस्तन्मुद्रा दत्त्वा स्वामिमहाराजः प्राह—"अहं जगन्मातुर्हस्ते क्रीडनकमात्रम्। सा

इच्छति चेन्मां निश्चितमेव तत्र संप्रेषयिष्यति। न युष्माभिर्व्याकुलैर्भवितव्यम्। मुद्रा एताः साम्प्रतं दरिद्रनारायणसेवायामेव व्ययितव्याः"।

अथ हायदरावादाञ्चलत आयातमामन्त्रणम्। मन्मथनाथभट्टाचार्यस्य बन्धुः 'इञ्जिनियार्'-मधुसूदनचट्टोपाध्याय आसीदस्य कर्ता। स विज्ञापयति स्म, तत्रत्याः सर्वे सम्भ्रान्ता उच्चशिक्षिता जनाः स्वामिमहोदयस्य दर्शनलाभार्थं परमोद्ग्रीवा वर्तन्ते इति। स्वामिमहाराजः "आमन्त्रणमेतन्नोपेक्षणीयम्" इति संचिन्त्य १८९३ खीष्टाब्दीय-फेब्रुयारीमासस्य दशमदिवसे हायदरावादं जगाम। बाष्पीय-यानविरामस्थाने तत्र तिलधारणस्य स्थानं नासीत्। सर्वे विशिष्टतमोच्चपदस्था जनास्तत्र समागतवन्तः। राजा श्रीनिवास-राव-महोदयः, महाराज-रम्भाराव-बाहादुरः, पण्डित-रतनलालः, नवाव-इमादजङ्ग-बाहादुरः, राय-हुकुम-चाँदः, श्रेष्ठि-मतिलालः—एवमन्ये च लब्धप्रतिष्ठाः जनास्तत्र समागच्छन्। दिव्यज्योतिःस्नातो दण्ड-कमण्डलुहस्तस्तरुणः संन्यासी धीरपदसञ्चारेण बाष्पीय-शकटादवततार। विपुला जनता तमुच्चजयध्वनिभिरभिनन्दयामास।

हायदरावादाञ्चले स्वामिमहाराजः प्रथमं मधुसूदन-चट्टोपाध्याय-महोदयस्यातिथ्यं स्वीचकार। दिवसद्वयानन्तरं निजामबाहादुरस्यालक-नवाव-स्यार-खुरसिदजङ्ग-बाहादुरस्यानुरोधक्रमेण निजाम-बाहादुरस्य प्रासादे एव स्वामिमहाराजोऽतिष्ठत्। नवाव-बाहादुरो धर्मविषये उदारमार्ग्यासीत्। आसीच्च हिन्दुधर्मं प्रति श्रद्धासम्पन्नः। अवलोकितानि चानेन नवाव-बाहादुरेण भारतवर्षस्थितानि समग्र-हिन्दुतीर्थस्थानानि।

ससम्भ्रमाभ्यर्थनया नवाव-बाहादुरः स्वामिमहाराजाय स्वपार्श्वे स्थानं ददौ। ततः प्रारभत धर्मविषयक-पर्यालोचनम्—हिन्दु-महम्मद-खीष्ट-धर्मीय-मूलसूत्राणां बहुलं समालोचनम्। सयुक्तिकं स्वामिमहोदयस्य वक्तव्यं प्राग्रेऽसरत्। सूत्रेष्वेतेषु कुत्रापि नास्त्यनैक्यं वैसादृश्यं वा। तेषु समन्वय-साधनमपि सुकरं सुभगञ्च। प्रसङ्गत इत्थमपि स्वामिमहा-

राजोऽभाषत—यत् श्रीश्रीजनन्या अभिलाषे सति अनुपम-वेदान्त-शास्त्र-साहाय्येन धर्म-समन्वय-प्रचारार्थं पाश्चात्त्य-देशगमनमपि तस्यासीदभिप्रेतम् इति ।

स्वामिमहोदयस्य ज्योतिर्मयदिव्यलावण्यम् अलौकिकप्रतिभा शास्त्र-विश्लेषणचातुर्यं च नवाव-वाहादुरस्य चमत्कृतिं संजनयामास । तत्क्षणादेवासौ सहस्रमुद्रोपहारदानेऽभिलाषं प्रकटीचकार । स्वामिमहाराजस्तु-कथयत्—"मन्ये समयोऽसौ साम्प्रतमपि नागत इति । पाश्चात्त्यदेश-गमनाय जनन्या आदेशो मिलेत् चेन्निश्चितमेव भवन्तं ज्ञापयिष्यामि" ।

हायदरावादाच्चलतः स्वामिमहाराजः प्रत्याजगाम माद्राजनगरम् । तदानीमपि नासौ चिकागोधर्मसभायां योगदानविषये स्थिरसङ्कल्प आसीत् । परं माद्राजप्रान्तीय-शिष्या अनुरागिणो बन्धवश्च सर्वे तम् आमेरिकायां सम्प्रेषयितुं बद्धपरिकरा बभूवुः । तेषां कर्मप्रचोदनया स्वामिमहाराजोऽपि प्रोद्बुद्धो बभूव । प्राह च—

आमेरिकायां गमनं मदीयं
जानामि युष्माकमतीव काम्यम् ।
विनाऽनुमत्या तु मदीय-मातुः
प्रवर्ततामत्र कथं मनो मे ॥ ६८

अपि च—

भरतधरणिजानामुच्चनीचाविशेषात्
प्रतिनिधिविधयाऽहं कामये तत्र गन्तुम् ।
अनुमतमिदमास्ते किं समेषां न वेति
प्रथममिह परीक्ष्यं सर्वथा श्रीमदार्यैः ॥ ६९

ततश्च—

धनमपि यदपेक्ष्यं गन्तुमामेरिकायां
तदपि न चयनीयं केवलं वित्तवद्भ्यः ।
अपि तु जनगणेभ्यः सर्वसाधारणेभ्योऽ-
कृत-लघु-गुरुभेदं ग्राह्यमेतन्मतं मे ॥ ७०

गुरोराज्ञा सर्वथा सर्वदा शिरोधार्या। भक्तशिष्याः प्रतिद्वारं भिक्षार्थं परिबभ्रमुः। तेषां आग्रहानुरागैकान्तिकताश्चिरं सुवर्णाक्षरै रामकृष्ण-धर्म-दर्शन-जगदितिहासे संलिखिता देदीपिष्यन्ते।

गुरुमहाराजस्य परमगुरुस्तुतिरेकान्तप्रिया ततोऽभ्यधिका मातृस्तुति-रिति माद्राजभक्तशिष्याणां परिज्ञातपूर्वा। ततस्ते एकदा समागत्य श्रीश्रीरामकृष्ण-सारदामणिस्तुतिमकुर्वन्—

**जय प्रभो जय दूरितभवभय सर्ववेदमय रिक्तगते**
**जयाम्बिके जय शिवभाष्योच्चय - दयाजितहृदय - भक्तवृते।**
**स्मरत गुरुनाम विश्वगुणधाम कृष्णयुतराम - कृपाकृते**
**जय मातर्जय वसुधाविस्मय कुशलैकाश्रय विश्वमते ॥ ७१**

ततस्ते परमश्रद्धया स्वामिमहाराजं प्राहुः—"देव! पूर्वमस्माभिः संगृहीतः पञ्चशतमुद्रामितोऽर्थो भवदाज्ञानुसारेण नर-नारायणेभ्यो दत्तः। साम्प्रतं जनसाधारणायादस्माभिः कियांश्चनार्थः संगृहीतः। सकृपं तं गृहीत्वाऽस्माननुगृह्णातु भवान्।"

ततो भक्तप्रेमदर्शनगद्गदचित्तः स्वामिमहाराजः प्राह—

**अर्थः साधारणानामयमतिमहितो मस्तके धारणीयो**
**दत्तोऽयं देशं-मात्रा ध्रुवमिति हृदये जायते धारणा मे।**
**युष्माभिः किन्तु रक्ष्यः कतिचन दिवसानेष युष्मत्समीपे**
**पश्चान्नेष्याम्यहं तं समय उपगते धारयन्नेव मूर्ध्ना ॥ ७२**

इत्युक्त्वा सर्वांस्तान् गमनायादिश्याचिन्तयत्, अहं गुरुदेवस्य रथः, तेन चालितश्चलामि। तस्य वीणाऽहं तदिच्छया वादितोऽस्मि। अहं तस्य क्रीडनकं, तेन खेलितोऽस्मि। तस्य करे यन्त्रमहं तस्येच्छया घूर्णितोऽस्मि च। सत्यं कृपामयो मे गुरुदेवो मां स्वप्रयोगेनामेरिका-गमनायादिष्टवान्। किन्तु मातुरादेशं विना नाहं कदापि गमिष्यामि सुदूरविदेशम्। 'घुसुडि'ग्रामे जननी मह्यमेकदा श्रीठक्कुर-धर्म-दर्शन-प्रचारार्थं देशपर्यटनायादेशं ददौ। किन्तु तेन किं पाश्चात्यदेशगमनमपि

अनुमतं मन्तव्यम् ? अथवाऽस्मिन् वारेऽपि मातुरादेशं विना नाहं कदापि देशाद्बहिर्गमिष्यामि ।

**स्वप्नेन लब्धेऽपि पितुर्निदेशे**
**मातुर्निदेशोऽपि मयाऽर्थनीयः ।**
**माता पितुः कोटिगुणाधिकेति**
**विज्ञायते भारतशासनेन ॥ ७३**
**आशीर्गुरोः काममुपासनीया**
**ततोऽप्युपास्या खलु सा जनन्याः ।**
**माता नृणां ज्ञानमथो तपस्या**
**सा साधनं सा भजनं बलञ्च ॥ ७४**

ततोऽहं नितरां मातुरादेशं प्रतीक्षे । पत्रं मात्रे संप्रेषितम् । साऽनुमतिं दास्यति चेदवश्यं यास्यामि, अन्यथा तु न यास्याम्येव ।

ईदृशी महागुरोरप्यभ्यधिका महामाता यदा स्वामिमहाराजाय गमनानुमतिं पत्रद्वारेण संप्रेषयामास, तदा करतालपूर्वकं स्वामिमहाराजोभ्युदीरयामास—

**"जय मातः श्रीश्रीसारदामणे जय ।**
**जय श्रीश्रीगुरुदेव जय ॥"**

श्रीश्रीमातुः सारदामणेः कृपादेशं लब्ध्वा श्रीश्रीस्वामिमहाराज आनन्देन ननर्त । तत एव केवलं स्वामिमहाराजः सोल्लासं प्रोद्घोषयामास—मातः !

**त्वत्समक्षं प्रतिज्ञां यामकार्षमहमेकदा ।**
**तामवश्यं करिष्यामि पत्रपुष्पोपशोभिताम् ॥ ७५**
**धर्मं कल्याणधाम्नो मम परमगुरोरद्वयं दर्शनञ्च**
**देशे देशान्तरेष्वप्यऽमनतिचिराद् घोषयिष्यामि नूनम् ।**
**प्राणान् स्वान् किञ्च कृत्वा पणमपि दृढं भारतोर्वी-जनन्या**
**विश्वे सञ्चारयिष्ये शमयुत-ममता-प्रीति-साम्यस्य वाणीम् ॥ ७६**

अपि च

अन्योन्यस्यातिदूरे सुचिरमुषितयोश्चित्तवृत्ति-प्रणाल्या
स्यादाश्लेषो भगिन्योरिव निविडतरः प्राच्य-पाश्चात्त्य-भूम्योः ।
प्राच्योपज्ञं तदेतज् जगति बहुमतं दर्शनं त्यागसारं
विज्ञानेन प्रतीच्या अचिरमनुभवेद् भोगसारेण मैत्रीम् ।। ७७

उत्पत्स्यते जगति नवं महामेलनक्षेत्रम् अननुमितपूर्वम् । नवामेरिका-भुवा सहाद्य पुरातन-भारतवर्षस्य नवसांस्कृतिकमेलनं भविष्यति परम-सुन्दरम् । मातुः परमकृपया तत्र प्रथमोपायोऽहं तस्याः सन्तानः ।

ततो देशजननीसकाशे श्रीस्वामिमहाराजः प्रार्थयामास—

पुण्यश्रीके भारतजननि !
सुदूरे विदेशे दीनहीनवेशे
दयस्व सुते शिवप्रसविनि ॥ ७८
कृपामयि वसुधामोहिनि
ज्ञानभक्तिप्रेम- सेवाप्रीतिहेम-
करण्डधारिणि पुण्यमालिनि ।। ७९
पञ्च ज्ञानादि-पुष्पाणि चारूणि मातृकार्चने ।
पाश्चात्त्यगलशोभीनि हितानि विश्वपूजने ।। ८०



माद्राजवासिनो यदा सर्वव्यस्थापनं चक्रुः स्वामिमहाराजस्यामेरिका गमनाय, तदा खेतडिमहाराजसकाशात् मुन्सी-जगन्मोहनलालमहोदयः समाजगाम स्वामिमहाराजं खेतडिमण्डलं नेतुम् । अपुत्रक-खेतडि-महाराजस्य स्वामिमहाराजवरप्रभावात् पुत्रो जात इति हेतोः पुत्रस्या-स्यान्नप्राशनमुपलक्ष्य गुरुदेवस्य उपस्थितिरवश्यकाम्या इति खेतडि-महाराजस्यैकान्ता प्रार्थना मुन्सी-महोदयेनोपस्थापिता । सर्वेषामनुरोधो-परोधसत्त्वेऽपि मुन्सीमहोदयः कथमपि स्वामिमहाराजं विहाय खेतडि-मण्डलं प्रत्यागन्तुं न सम्मतो बभूव । केवलमेकदिवसायापि स्वामि-महाराजस्य तत्र गमनमवश्यं करणीयमिति मुन्सी-महोदयस्य कातरा

प्रार्थनाऽभूत् । आमेरिकागमनस्य सर्वविधा व्यवस्था तस्मादेव स्थानान्-निश्चितं भविष्यतीति मुन्सीमहोदय उच्चैः प्रोद्घोषयामास । ततः खेतडिगमनं स्वीचकार स्वामिमहाराजः ।

सर्वे मद्रीय-शिष्या गुरुचरणरताः स्वामिवर्यस्य भक्ता
अन्ये कल्याणकामा अपि नयनजलाच्छन्ननेत्रा बभूवुः ।
चक्रुर्दुःखेन सर्वे जिगमिषति गुरौ यात्रिकं मङ्गलं ते
प्राप्स्यामो दर्शनं किं पुनरपि नहि वेत्यादिचिन्ताविषण्णाः ॥ ८१

राजकुमारस्यान्नप्राशनं तत्र मुख्यपात्रं तु सर्वथा स्वामिमहाराज एव । विशेषतस्तस्यामेरिकागमन-संवादश्रवणेन सर्वे परमोत्साहिता आनन्दकलकलमुखराश्च बभूवुः । खेतडि-महाराजोऽपि एकदा सान्ध्य-समीरणे प्रवहति विहगकूजनप्रपूरिते च कुलायसमूहे स्वीयराज्यस्य श्रेष्ठां नर्तकीमाहूय गुरुदेवं तोषयितुं सङ्गीतकरणायादिदेश । किन्तु गुरु-महाराजो न नर्तकीमुखात् सङ्गीतश्रवणे सम्मत आसीत् । एतज्ज्ञात्वा सा नर्तकी स्वामिमहोदयमुद्दिश्यैव करुणसङ्गीतमेकमगायत्—

( सङ्गीतम् )

प्रभो न गणय दोषराशिं मम
तारयाबलां मां समदर्शितया सर्वदोषहर ।
दोषे गुणे च भव समः
देव मम समदर्शि-नामधर ।
ब्रह्मात्मिकामिमां समुद्धर ॥ ८२
राजतेऽयःखण्डं देवमूर्तौ देवमन्दिरे
राजते च लौहच्छुरिका घातककरे
स्पर्शमणिस्पर्शनेनोभे समं स्वर्णरूपधरे ॥ ८३
दोषे गुणे च भव समः
न गणय दोषराशिं मम ॥ ८४
यमुनाह्रदयशोभि पुण्यमधुरं जलं
दूषितखातवाहि यदिदं समलं

गङ्गास्रोतसि जातं पवित्रं सकलं
हर हर दोषान् मम सर्वदोषहर ॥ ८५
न भव देव मम दोषगणनतत्परो
भव सत्यं त्वं समदर्शि-नामधरः ॥ ८६

अन्तरालात् सङ्गीतमेतच्छ्रुत्वा स्वामिमहाराजस्य भावान्तरमुपजातम्। अतो नर्तकीसमीपं गत्वा देवस्तामाह—"अहो चित्तद्राविणी हे ब्रह्ममयि तव गीतिः। अनया संस्पृष्टं मम हृदयम्। यथोक्तं सङ्गीतेऽस्मिन् तथा ममापि मतिः। ब्रह्मात्मकं जगत् सर्वम्। प्रसारिता मम दृष्टिस्तव सङ्गीतमहिम्ना। सत्यं धन्याऽसि त्वम्।"

नर्तकी प्राह, "देवदेव! सकृपं प्रणामाञ्जलिं मम गृहाण। तव प्रसादान्मयाऽद्य लब्धा शाश्वतदृष्टिः।"

समुपस्थिताः सर्वे च प्राहुः—"देव!

आजीविकादीन् गणयन् सुतुच्छं
समादृथास्त्वं हृदयं यदस्याः।
सेयं सुशिक्षा महती विशेषा-
दस्माकमन्तःकरणं चकर्ष ॥" ८७

ततः स्वामिमहाराजो महाराजमुद्दिश्य प्राह—"महाराज! सर्वं सुष्ठु संघटितम्। मनो मे कथयति, इतः परं मयाऽमेरिकागमने विलम्बो न न करणीयः। तदचिरादेव विदेशगमनानुमतिं भवतां सर्वेषां समीपे प्रार्थये।"

ततो खेतडिमहाराजे विलम्बकरणायानुनयं विदधाने स्वामिमहाराजः ससान्त्वनं प्राह—

"नरेश! तव मानसं मधुर-कोमलं वेद्म्यहं
तथापि तव सन्निधौ मम मनोरथं वेदये।
उपस्थित-विधेर्विदन्ननतिलङ्घ्यतां सर्वथा
विधूय विरहव्यथां भजतु सौमनस्यं भवान् ॥ ८८

पुनरपि पश्य—मम चिरममतामयी कुसुमकोमलहृदया जननी श्रीसारदामणिरपि मह्यमामेरिकागमनायानुमतिं दत्तवती। तस्या आशिषो न कदापि व्यर्था भवन्ति।"

तदा अश्रूणि प्रमार्ज्य खेतडिमहाराजः प्राह—"देव! यदि जगदम्बिका स्वयं दत्तवत्याशिषं, तदा कथं वयं भवतो गमने बाधां संजनयिष्यामः? केवलमेतद्देवास्माकं सर्वेषां संप्रार्थनम्—

**समाशास्या देवैरपि भवतु ते सिद्धिरतुला**
**निकामं माहात्म्यं प्रसरतु भवे भारतभुवः।**
**विरोधो भ्रातृणां प्रशमनमुपेयात् प्रतिदिशम्**
**अविच्छिन्ना शान्तिः पदमुपनिधेयादिह दृढम्॥ ८९**

पुनः देव! क्षुद्रतमस्यापि मम तवान्तिके आस्ते किञ्चित् प्रार्थनीयम्। श्रूयताम्—

**यानङ्गीकृतवान् पुरा "विविदिषानन्दा"दि-नामोच्चयान्**
**आर्यस्तानधुना जहातु कृपया न प्रीतये ते हि मे।**
**अद्यारभ्य विराजतामिह "विवेकानन्द"-नाम्ना भवान्**
**इत्येषा भवदर्च्य-पादयुगले मूर्ध्ना मम प्रार्थना॥ ९०**

स्वामिमहाराजोऽपि "तथाऽस्तु" इति प्राह।

स्वामिमहाराजेन सार्धं प्रत्युद्गमनाय मुम्बइनगरीपर्यन्तं जगाम श्रीजगन्मोहनलालः; माद्राजतः समागच्छन्—आलसिङ्गा-पेरुमलः। श्रीजगन्मोहनलालः "राजगुरू राजगुरुरिव विदेशयात्रां कुर्यादि"ति नीतिमनुसृत्य सर्वविधव्यवस्थापनं चकार। बन्धनमुक्त-संन्यासी जगाम पाश्चात्य-देशम्। तथापि जननीत्रयवदनानि संस्मृत्य अश्रुरोधं कर्तुं न शशाक।

॥ जयतु जननी सारदामणिः॥

—o—

## ॥ द्वितीय-खण्डम् ॥

१८९३ खीष्टाब्दीय-मे-मासस्यैकत्रिंश-दिवसे स्वामिविवेकानन्दो मुम्बइनगरीतो जलचर-बाष्पीय-यानेनामेरिकादेशमुद्दिश्य प्रतस्थे । यानस्थितैः सर्वैः सार्धं विशेषतो यानाध्यक्षेण सहाचिरात् स्वामिमहोदयस्य प्रीतिपूर्णं सौहार्दम् अघटत । खाद्यादिग्रहणे पाश्चात्त्याचारप्रभावः स्वामिमहाराजस्यासौकर्याय नाभूत् । यतः—

नैतत्तस्याभवदविदितं गन्तुरन्यत्र देशे
आचाराणामनुकृतिमृते दुर्लभाऽभीष्टसिद्धिः ।
तस्मान्नाभूत् प्रबलमनसः स्वामिवर्यस्य सद्यः
स्वाचाराणां परिहृतिविधौ कोऽपि बाधावतारः ॥ ६१

सप्तदिवसानन्तरं जलयानं कलम्बो-नगरीमगमत् । स्वामिमहाराजस्तत्र बुद्धमन्दिरे महानिर्वाणप्राप्त-शायितबुद्धमूर्तिं वीक्ष्य परमानन्दमवाप । मनसि च तस्यैवं भाव उदियाय—

भगवदवतरत्वं मत्स्य-कूर्मादिकेषु
दशसु यदपि तुल्यं तत्र चास्ते विशेषः ।
अयमिव करुणाब्धिर्दीक्षितो दुःखहानौ
निखिल-जनगणानामस्ति कोऽन्योऽवतारः ॥ ६२

ततश्च क्षणं विचिन्त्य पुनरपि सस्मितमाह—

जात्या स एष भगवान् मम भारतीयोऽ-
प्यत्रागतः कथमभूत् करुणावतारः ।
मन्ये कदाचिदयमप्यवतारतत्त्व-
प्रख्यापनाय विधिना निहितोऽत्र देशे ॥ ६३

"हंकङ्"-नामकस्थाने स्वामिमहाराजस्य दिवसत्रयावस्थानावसरो बभूव। ततश्च स्वामिमहाराजः 'क्यान्टन्'नगरमगच्छत्। मठ-मन्दिर-दर्शनेन तत्रापि स्वामिमहाराजः परममानन्दं लेभे। अन्यतस्तु चीन-वासिनाम् अवर्णनीयं दारिद्र्यं तमुदग्रं पीडयामास च। ततो जापान-देशीयनगराणि नागासिका-ओसाका-कियाटो-टोकिओ-प्रभृतीनि वीक्ष्य स परां मुदमवाप। "इयाकोहामा"तः प्रशान्तमहासागरं तीर्त्वा स्वामि-महाराजो "भ्यांकुभार" पोताश्रयं जगाम। तस्मात् स्थानाच्चिकागो-नगरस्य दूरत्वं सहस्र-क्रोशमितं, यस्यातिक्रमणे वाष्पीय-शकटस्यापि दिनत्रयमपेक्षितम्।

ऊनविंश-शताब्द्या अन्तिमे भागे आमेरिकादेशे प्राणचाञ्चल्यं भृशं ववृधे—इउरोपदेशतो विविध-जातेस्तत्र गमनाद् वासस्थाननिर्वाधनाच्च। चिकागोनगरं तदासीत् आमेरिकादेशस्य बृहत्तमं शष्य-गवादिपशुविक्रय-केन्द्रं तथा च प्रधान-वाष्पीय-शकटकेन्द्रम्। ततश्चिकागोनगरं बभूव विभिन्नजातिसमागमस्थानं विचित्र-भावधारासंमिश्रणक्षेत्रञ्च।

स्वामिमहाराजो महासम्मेलनस्य कतिभ्यश्चन मासेभ्यः प्रागेव चिकागोनगरं जगाम। किन्तु तत्र कोऽपि तस्य पूर्वपरिज्ञातो नासीत्। ततः खाद्य-पानीय-वसतिस्थानप्रभृति-विषये महती चिन्ता तस्य समजनि। विचित्र-देशस्य विचित्रतरा रीतिनीतयः, विचित्रतमञ्च पुनश्चालचलनम्। यत्रैव जगाम स्वामिमहाराजस्तत्रैवासीत् कौतूहलमयी दृष्टिस्तस्मिन्ना-पतिता। क्षुद्रक्षुद्रकर्मव्यपदेशेनार्थप्रदानेऽपि स बभूवातितरां वञ्चितः। अतः कस्याञ्चिद् अन्नविक्रयपण्यवीथिकायाम् (होटेल) उषित्वा कथञ्चित् परित्राणं स्वामिमहोदयो लेभे।

विपत् कदाप्येकाकिनी नायाति। धर्ममहासभानियमानुसारेण काचन परिचितिरेकान्तावश्यकी। सहयोगितानियमनार्थं नामसन्नि-वेशनं योगदानकारिणां पञ्जीग्रन्थे—तदप्येकान्तप्रयोजनम्; किन्तु केनो-पायेन तत् सम्भविष्यति? विशेषेण "रेजिष्ट्रि"-करणस्य समयोऽपि

प्रायेणापगत आसीत्। इतश्च अर्थलाघवात् "होटेल" निवासोऽपि कष्टदायको बभूव। तत् क उपायः? स्वामिमहाराजो मनस्यकरोत्—

ताद्दक् समुत्साह इहागमार्थं
स क्लेशभोगः स्मरणस्य योग्यः।
यत्नश्च तावानितिकृत्यतायां
तेषामियं हा परिणामवार्ता!॥ ६४

तत एकदा विशेषेण व्ययलाघवार्थं स्वामिमहाराजो 'बोष्टन' नगराय प्रतस्थे। पथि बाष्पीयशकटे तस्य परिचयोऽभूत् 'बोष्टन' निकटवर्तिन्या कयाचन ग्रामवासिन्या सह। नाम तस्या "मिस् काटे स्यान्वर्न्" (Miss Kate Sanborn) इति।

तं भारतादागतमत्र शृण्वती
प्रागेव साऽभूत् सुतरां समुत्सुका।
पश्चाद् गुणैर्वाक्पटुतादिभिर्भृशं
श्रद्धान्विता स्वामिवराय साऽभूत्॥ ६५

अतः सा महतोत्साहेन स्वामिमहाराजं तस्या आतिथ्यपरिग्रहणाय स्वीकारयामास। अस्या 'मास्यचुसेट्'स्थ-ग्राम्यगृहे निवसतः स्वामिमहाराजस्य प्रतिदिनं पञ्चदश-मुद्रामितं व्ययलाघवं बभूव। अन्यतस्तु स्यान्वर्न् महोदया प्रतिदिवसं बहून् जनान् स्वामिसंदर्शनार्थमाह्वयामास—कामं तेषां केचन निश्चितं कष्टदायिन आसन् तथापि तेष्वासन् समव्यथिनः प्रशस्तोदारहृदया अपि। इत्थं नारीकृते संघटितस्य 'सेरवर्न्'-चरित्रसंशोधनागारस्य अध्यक्षा स्वामिमहाराजस्य गुणानुरागिणी बभूव। तन्निकेतनं दृष्ट्वा स्वामिमहाराजस्य प्रचुरानन्द उदपद्यत। (१)

ग्रीष्मस्यापगमे शैत्याधिक्यमजायत आमेरिकादेशे। तदुपयोगि-

१) एतद्विषये स्वामिमहाराजेन कञ्चन शिष्यमुद्दिश्य लिखितं पत्रं द्रष्टव्यं—Life of Swami Vivekananda by his Eastern and Western Disciples, 6th edition (1960), p. 296.

वस्त्रादेरासीदेकान्ताभावः। एतदर्थमपि पञ्चशतमुद्रा न्यूनकल्पेन व्ययितव्या आसन्। अथैकदा स्वामिमहाराज आसीन् कस्यांचित् नारी-सम्मेलन-संस्थायां (Women's Club) वीररमणी--श्रीरमाबाई-चरित्रमधिकृत्य भाषणदानाय समाहूतः। अनेन भाषणेन स्वामिमहाराजः प्राथम्येनाऽऽमेरिकावासिनां प्रीतिं समाचकर्ष।

क्रमेण बहवः ख्यातनामानो जना अपि स्वामिमहोदयसाक्षात्काराय आगच्छन्। एवं समागत आसीद् हार्भार्ड्-विश्वविद्यालयस्य ग्रीक्विषय-प्रधानाध्यापकः जे. एइच्. राइट्-महोदयः (J. H. Wright)। तेन सह स्वामिमहाराजस्य चतुर्घटिकाव्यापि बहुविषयक-पर्यालोचनमजायत। परमश्रद्धाभरेण अध्यापक-राइट्-महोदयोऽकथयत् "अवश्यमेव भवतो निखिलविश्व-धर्ममहासम्मेलने योगदानं करणीयं, येन निखिलदेशेन सार्धं भवतः परिचयः संघटिष्यते"। स्वामिमहाराजस्ततः स्वीयं परिचितिपत्रविहीनत्वं तं ज्ञापयामास।

अध्यापकप्रवरः प्राह—"स्वामिमहाराज!

स कीदृगिति-जिज्ञासा सूर्यांशोरन्धतामिव।
भवत्परिचयप्रश्नः प्रष्टुर्मूर्खत्वमावहेत् (१)॥ ६६

ततोऽध्यापकमहोदयस्तस्य प्रियबन्धुं प्रतिनिधिविनिर्णयसमितेः सभापतिं डाः व्यारोज्-महोदयं स्वामिमहोदयविषये पत्रमेकं ददौ। पत्रेऽस्मिन् स लिलेख—"अस्माकं सुपण्डिताध्यापक-महोदयानां सर्वेषां ज्ञान-समन्वयफलादपि गुरुतरफलवाही एष जनः।"(२) पुनः स्वामिमहाराजस्यार्थाभावं परिज्ञाय स तत्कृते चिकागोगमनाय निदर्शनपत्रम् (ticket) एकमक्रीणात्।

---

१) "To ask you, Swami, for your credentials is like asking the sun to state its right to shine", op. cit., p. 297.

२) "Here is a man who is more learned than all our learned Professors put together", op. cit.

एवं चतुर्दिग्भ्य उपागतं विपद्-
घोरान्धकारं ग्रसनार्थमुद्यतम् ।
प्राप्तं विलीनत्वमवेक्ष्य भूयसा
सस्मार मातुः करुणां स योगिराट् ॥ ६७

किन्तु दौर्भाग्यं महत् यद् राइट्-महोदयेन दत्तं परिचयपत्रादिकमन्य-मनस्कतया स कुत्राप्यपातयत् । यश्च बन्धुः बाष्पीयशकटेन आगमनकाले साहायकं दातुं तस्मै प्रतिश्रुतवान्, सोऽपि इतोमध्ये क्वापि गतः । ततो ये केचन तस्य समीपमागच्छन्, तान् पृष्ट्वाऽपि न किमप्युत्तरमलभत स्वामिमहाराजः । केचन वा तं यथेच्छमुपजहसुः ।

सम्पूर्णनिराशः स्वामिमहाराजो भाटकलब्ध-वासाशनस्थानमगच्छत्, तत्रापि तं 'निग्रो'-जातीयं मन्यमाना अन्नविपण्यध्यक्षास्तस्मै स्थानं न ददुः । तस्माद् गभीरनिराशाखिन्नः स्वामिमहाराजो बाष्पीययान-विरामस्थलस्य पश्चाद्भागे काञ्चन काष्ठपेटिकां दृष्ट्वा तस्यान्तः प्रविश्य शयनसुखमलभत । बहिरविरलतुषारपातः पेटिकामध्ये वायुप्रवाहकरुण-ध्वनिश्च पिण्डीभूतान्धकारं चक्रतुरसह्यतरं । स्वामिमहाराजस्य कातर्यं वस्त्रहीनतया समधिकतरं ववृधे । क्षुत्पिपासाज्वाला च तं मर्मदाहं ददाह ।

अथ भागवत-विधानबलात् समागते परेद्युः प्रत्यूषे स्वामिमहाराजः परिहितमसीमलिनवस्त्रो भिक्षार्थं भ्रमणरतो बभूव । भिक्षास्थले केवलं जनानामुपहासस्तमवृणोत् । केचन तं भर्त्सयामासुः, अन्ये च केचन लाठ्योषधेर्महोपकारविषये गाथां श्रावयामासुः ।

नितान्त-श्रान्तक्लान्तः स्वामिमहाराजः पथिपार्श्वे उपविश्य सस्मार मातरं श्रीसारदामणिम् ।

मातस्तवादेशवशादुपागाम्
आमेरिकायामिह दूरदेशे ।
सा त्वं न चेदिच्छसि जीवनं मे
यद्वा सुखं तत् किमहं करोमि ॥ ६८

सहसा पुरतः प्रासादोपमाट्टालिकाया द्वारं बभूवोन्मुक्तम्। बहिरागच्छच्च काचन दिव्यलावण्यधरा आमेरिकावासिनी। मधुरया गिरा स्वामिमहाराजमभाषत सा—"अपि भवान् धर्मसभायाः कश्चन प्रतिनिधिः ?" तथेति प्रतिपन्ने स्वामिमहाराजे तदिच्छाक्रमेणैव स तस्या महानुभवताद्योतकम् आतिथ्यं परिजग्राह। सा च तस्मै महासभाप्रतिनिधिनिर्वाचनादि-विषयेषु पूर्णसाहायकं प्रतिश्रुतवती। तस्या एवानुकूल्येन स्वामिमहाराजो न केवलं प्रतिनिधिरूपेण धर्मसभायां वृतो बभूव, परन्तु प्रतिनिधिजननिर्दिष्ट-वसनाशनादिविषयेष्वपि सविशेषसाहायकं लब्धवान्। अहो महाजनन्याः श्रीश्रीसारदामणेरसीमा कृपा !

१८९३ खीष्टाब्दीय-सेप्टेम्बरमासीयैकादशदिवसस्य प्रातरेव स्वामिमहाराजो हेइल्-महोदयायाः कृपया धर्ममहासम्मेलन-प्रतिनिधित्वपदे वृतो बभूव। तद्दिनेऽपराह्णे एव स्वामिमहाराजश्चिकागोधर्ममहासम्मेलने तस्य विश्ववन्दितं भाषणमदात्। अहो आश्चर्यम् !

**प्रातः स्वोदरपूरणेऽपि सुतरां यस्याभवत् संशयो**<br>
**भिक्षान्नञ्च बभूव दुर्लभतरं द्वारेऽटतो द्वारतः।**<br>
**सन्ध्यायाः पुर एव विश्वविदितः सोऽभूद् गुरुर्धार्मिकः**<br>
**सत्यं क्रीडति कन्दुकीकृतजनादृष्टो विधिर्बालवत्॥ ६६**

विश्वमानवेषु आध्यात्मिक-सामञ्जस्यविधानार्थं मानवानां या दीर्घकालव्यापिनी प्रचेष्टा, तस्या इतिहासे सम्मेलनस्यास्य सुमहत् स्थानमास्ते ध्रुवम्। "वैचित्र्यमध्ये ऐक्यं, पुनरैक्यमध्ये वैचित्र्यम्"—इति वचसो मूललक्ष्यस्थानं विश्लेषणीयम् आसीत् महासम्मेलनस्यास्य ; पुनर्द्वयोः प्राच्य-पाश्चात्त्य-जगतोः सांस्कृतिकादानप्रदानयोः प्रयोजनीयताधिक्यमवलम्ब्य सर्वेऽपि वक्तृवरास्तद्दिने स्व-स्व-मतं संप्रचारयामासुश्च।

फलतः—सम्मेलनस्यास्य,

**स्वधर्मवैशिष्ट्यविलोपनं विना**<br>
**परस्पर-प्रीति-सुहृत्त्ववाञ्छया।**

अपूर्वशान्त्यानयनं महीतले
महत्तमं लक्ष्यमभूत् सभासदाम् ॥ १००

अस्यां सभायामुपस्थिता आसन्—निखिल-विश्वस्य सप्तसहस्रधर्म-प्रतिनिधीनामन्यतमाः—ब्राह्मधर्मप्रतिनिधिः प्रतापचन्द्रमजुमदारः, मुम्ब-ईस्थ-नागरकारः, जैनसमाजप्रतिनिधिर्वीरचन्द्रगान्धिः, थिओजफिष्ट्-सोसाइटी-प्रतिनिधिः एनि-वेसान्ट् तथा चक्रवर्ती च । हिन्दुधर्मस्य प्रतिनिधिरत्र सर्वकनिष्ठ आसीत् । सभापतिरासीदत्र क्याथलिक-सम्प्रदाय-प्रधान-धर्माधिनायकः कार्डिनाल्-गिवन्स्-महाशयः ।

सभागृहं प्रविश्य कियत्कालं यावत् श्रीविवेकानन्दो ध्यानस्तिमित इव भाति स्म । सभापति-महोदयस्यानुरोधक्रमेण प्रतापचन्द्रमजुमदार-महोदयस्तथा च चक्रवर्ति-महोदयो भाषणमदाताम् । तत्र स्वभावगत्या कलगुञ्जनं कदापि, करतालध्वनिर्वा कदाप्यभूत् , प्राणस्योन्मादना तु प्राकट्यं नागमत् ।

तस्मिन् दिवसे स्वामिमहोदयः सभापति-महोदयेन समाहूत आसीद् वारद्वयम् ; "पश्चाद्भविष्यति" इत्युक्त्वा स समौनं रेजे ध्यान-निलीनः । अथ पुनर्यदा सभापति-महोदयेन भाषणविषय उक्तमासी-त्तदा यदि भाषणं नादास्यत् स्वामिमहोदयः, नूनं तस्य भाषणदानस्यावसरो नामिलिष्यदेव—ततः स्वामिमहाराजो भाषणदानाय प्रवृत्त आसीत् । अवश्यमितोमध्ये अन्तरतमदेशाद् भागवतनिर्देशो निश्चितं तेन लब्धोऽ-भवत् । बालार्करागरञ्जितमिव महापुरुषस्यास्य रूपं दृष्ट्वैव सर्वे विस्मिता आसन् ।

यदा भारतीय-पद्धत्या अभिवादनं कृत्वा स्वामिमहाराजः सभास्थ-जनान् मधुमयकण्ठेन "भगिन्यो भ्रातरश्चे"ति सम्बोधयामास, तदैव सभास्थलं समुच्चकरतालिकाध्वनिभिर्मुखरितं बभूव । सर्वेषां हृदयेषु समजनि परम-ममत्वमधुरो भावः । ततः स्वामिमहाराजो विश्वनन्दितं भाषणं दातुमारेभे—

"भवद्भ्यो यदभिनन्दनमासादितं मया, तदर्थं धन्यवाददानार्थिनो मे हृदयमानन्देनाऽऽस्तं परिप्लुतम्। जगति सुप्राचीनं संन्यासधर्ममवलम्बमानानां पक्षतः, सर्वेषां धर्माणां जनन्या नाम्ना ; सर्वश्रेणी-सम्प्रदायगतानां कोटिकोटि-हिन्दूनां पक्षतश्चाहं भवद्भ्यः सर्वेभ्यो धन्यवादान् विज्ञापयामि।

अत्रत्य-भाषणपराणां केचन प्राच्यदेशागतान् प्रतिनिधीनस्मान् स्वस्वदेशेषु तितिक्षाशिक्षणाय धन्यवादभाजनानीत्याहुः। मम धर्मस्तु न केवलं तितिक्षां परन्तु शाश्वतग्रहणमपि विश्वं शिक्षयति। वयं न केवलं विश्वसिमः शाश्वतसहने परन्तु सर्वेषां धर्माणां सत्यपरत्वेऽपि। मम धर्मस्य वाहिका या प्राणमयी संस्कृतभाषा, तया भाषया भवतां "एक्स्क्लुसन्" इति शब्दस्यानुवादोऽपि न संभवति। ततश्च—

धर्मान्तरेणार्पितनिग्रहाणां
स्थानं विधत्ते शरणार्थिनां या।
तथाविधायां मम जन्म जातौ
सगर्वमेतत् प्रभवामि वक्तुम्॥ १०१

रोमकात्याचारजर्जरितानां यहूदीधर्मावलम्बिनां श्रेष्ठाः केचन ध्वंसावशिष्टाः स्वधर्ममन्दिरविनाशसमकाल एव दक्षिणभारतमागता अस्मद्भारतमातुरङ्काश्रयं लेभिरे।

महिममय-जरथुशत्रधर्मावलम्बिशेषाश्च भारतजननीक्रोडसमाश्रिताः सुखमद्यापि निवसन्तीत्यहो पुनरपि ममानन्दातिशयमयो गर्वः। साम्प्रतं श्रावयामि भवतः कञ्चन स्तुत्यंशं यं कोटिशो भारतीयजना नित्यं समुच्चारयन्ति, यदहञ्च बाल्यादारभ्य सर्वदा समुच्चारयामि,

"रुचीनां वैचित्र्यादृजुकुटिल-नानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥"

अर्थाद्यथा नैका नद्यो मार्गान्तरेणैकमेव समुद्रं प्रविशन्ति, हे भगवन्! तद्वद् विभिन्ना धर्ममार्गा अपि जनान् त्वत्सकाशं नयन्तीति।



अस्माकं गीताग्रन्थे विलिखितमास्ते—

"ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥"

सम्मेलनाधिवेशनेषु श्रेष्ठं वर्तमानाधिवेशनमपि अस्य गीतांशस्य परिपूर्तिस्वरूपम्, अस्य मूलमन्त्रस्य जीवदुदाहरणमेव। ममैषा निश्चला धारणा—

यैषा सम्प्रति साम्प्रदायिकभिदा धर्मान्धता या त्वियं
तन्मूलत्वमुपागता पुनरहो येयं कुसंस्कारता ।
एता दुष्टमहापिशाच्य इतराः क्लिश्नन्ति नित्यं धरां
नश्येयुर्यदि ता ध्रुवं वसुमती धन्या च पुण्या भवेत् ॥ १०२

जगति हिंसा प्रभूता प्रजाता, शोणितधारा च पुनः पुनः कालुष्यं नीतवती धरित्रीं, सर्वनाशः समजनि सभ्यतायाः, समग्रजातिषु संजातं नैराश्यम्। मयोक्तं पिशाचीत्रयं यदि न तिष्ठेत्, मानवसमाजो द्रुततरामुन्नतिं लभेतेति कः सन्देहः।"

भाषणस्य सारवत्तया रूपगरिम्णा कण्ठमहिम्ना च स्वामिविवेकानन्दः श्रेष्ठवक्तृरूपेण परिचितो बभूव।

अस्य भाषणस्य वर्णनप्रसङ्गेनामेरिकामण्डलस्य विशिष्ट-महिला-कविः श्रीमती ह्यारियेट्मन्रो-महोदयेत्थं लिलेख—"सर्वेषां पश्चात् आश्चर्यपुरुषः स्वामिविवेकानन्दो भाषणेन सर्वमनांसि तथाचकर्ष येन चिकागोनगरी तस्य नामप्रचारेण मुखरिताऽसीत्। गैरिकवसनधारी सुदर्शनः स्वामिमहाराजो विशुद्धांग्लभाषयाऽस्मत्सकाशे तस्यानुपम-भाषणम् उपस्थापितवान्। तस्य विपुलव्यक्तित्वस्याकर्षणी शक्तिः, सङ्गीत-मयगम्भीरकण्ठस्वरः, संयतभावावेगः, पाश्चात्यजगत्समक्षं प्रथमप्रदत्त-वाण्या अपरिमेयसौष्ठवम्—एतेषां सर्वेषां समन्वयेन वयम् अपूर्व-दुर्लभा-वेगाभिभूता आस्म। श्रेष्ठवाग्मितायास्तदासीद् ध्रुवं चरम-निदर्शनम्।"

परस्मिन् दिवसे आमेरिकामण्डलस्य सर्वेषु पत्रपत्रिकादिषु स्वामि-

महोदयस्य महिममयानि चित्रं भाषणं कृतित्वञ्च प्रकाशितानि। दिवसाभ्यन्तरे स्वामिमहोदयो निखिलविश्वस्य श्रेष्ठ-योगिरूपेण परिचितो बभूव।

कतिपय-घटिकाभ्यः पूर्वमप्युग्र-रूपम्
अनटनमनुभूतं येन वस्त्राशनादेः ।
स तु यतिरधुनाभूद् ग्राह्य-पादाब्जरेणु-
र्निखिलधरणिमान्यो धर्मनेतृप्रधानः ॥ १०३

१८९३ खीष्टाब्दीय-सेप्टेम्बरमासस्य ऊनविंश-दिवसे स हिन्दुधर्मविषयकं तस्य भाषणं ददौ। ततः परं कतिचन स्वामिविद्वेषिणस्तथा यतन्ते स्म यथा स्वामिमहाराजस्यावमानना घटेत। ते चैवं प्रचारयामासुर्यद्विवेकानन्द-व्याख्यातो हिन्दुधर्मस्तथ्यतस्तथा कदापि न। किञ्च, स्वयं स्वामिमहाराजोऽपि नोच्चवंशसम्भूतस्तस्मादुच्चवंशान् प्रति विद्वेषपरायण इत्यादि। धर्ममहासभाकर्तृपक्षास्तु सर्वथा स्वामिमहाराजस्य गुणग्राहिणः पुनर्द्वाविंशतितमदिवसे तं भाषणायाऽऽमन्त्रयामासुः। अत्र स्वमतं स्वामिमहोदयोऽवाधयुक्तितर्कबलेन तथा प्रतिष्ठापयामास यथा विरोधिनः सर्वे मौनं भेजिरे।

धर्मसम्मेलनस्यान्तिमे दिवसे (सेप्टेम्बरमासस्य सप्तविंशतितमदिवसे) स्वामिविवेकानन्दो विश्वधर्मं प्रचारयामास। अस्मिन् धर्मे सङ्कीर्णताया लेशोऽपि न विद्येत। धर्मोऽयं मानवमनोभावमात्रं सहेत, मानवैक्यसाधनं मार्गमात्रं स्वीकुर्याच्च। स्वामिमहोदयः सर्वानाहूय प्रोवाच— "धर्ममिमं प्रचारयन्तु भवन्तः; सर्वे भवतामनुगामिनो भविष्यन्ति। बुद्धवाणी-विश्वासपरा धर्मसभासीदशोकस्य; आकवर-धर्मसभोद्दिष्टो धर्मो विश्वधर्मानुरूपोऽपि राजसभास्थ-धर्मत्वात् सर्वथा सीमाबद्ध आसीत्। भगवान् सर्वधर्मेषु राजते—अस्य महतो वादस्य प्रचारभारोऽद्यामेरिकामहादेशस्य स्कन्धोपरि समायातः। यो हिन्दूनां ब्रह्म, जरथुशत्रवादिनामहुर्मज्दा, बौद्धानां तथागत-बुद्धः, खीष्टधर्मावलम्बिनां स्वर्गवासी परमपिता, यहूदीनां जिहोवा च, स एव भवद्भ्य एतन्महाव्रतप्रचारे शक्ति

ददातु। एकदा प्राच्यदिगञ्चले समुदिता तारका कदाचनात्युज्ज्वला कदापि वा स्तिमिता प्रतीच्य-दिग्विभागं प्रति ससार। समग्र-पृथ्वी-परिभ्रमणानन्तरं सा तारका सहस्रगुण-प्रोज्ज्वलतामादधती इदानीं 'स्यान्पो'सीमान्ते पूर्वतम-दिक्चक्रवाले समुदेष्यति। जयतु स्वाधीनता-मातृभूमिः कलम्बिया। कलम्बिये! तव करः कदापि न प्रतिवेशि-रक्तेन रञ्जितः, परस्वापहरणपूर्वकम् ऐश्वर्याधिकाररूपः साधारणः पन्था-स्त्वया नावलम्बितः; तवोपरि भारो न्यस्तो मानवसभ्यतायाः पुरोभागे समन्वय-(१) जयपताकासंप्रसारणस्य"।

सेप्टेम्बर-मासस्य सप्तविंशदिवसीय उपसंहारभाषणे स्वामिविवे-कानन्दस्तस्य वाणीसारममेत्थं प्रकाशयामास—

"खीष्ट-धर्मावलम्बी न भवेद् हिन्दुधर्मान्तरितो बुद्धधर्मान्तरितो वा।

---

१) "Offer such a religion and all the nations will follow you. Asok's Council was a Council of Buddhist faith. Akbar's, though more to the purpose, was only a parlour meeting. It was reserved for America to proclaim to all quarters of the globe that the Lord is in every religion.

"May he, who is the Brahman of the Hindus, the Ahur Mazda of the Zoroastrians, the Buddha of the Buddhists, the Jehovah of the Jews, the Father in Heaven of the Christians, give strength to you to carry out your noble idea. The star arose in the East; it travelled steadily towards the West, sometimes dimmed and sometimes effulgent, till it made a circuit of the world, and now it is again rising on the very horizon of the East, the borders of the Sanpo, a thousand-fold more effulgent than it ever was before.

"Hail Columbia, motherland of liberty! It has been given to thee who never dipped her hand in her neighbour's blood, who never found out that the shortest way of becoming rich was by robbing one's neighbours, it has been given to thee to march at the vanguard of civilisation with the flag of harmony."

Vide Life of Swami Vivekananda by His Eastern and Western Disciples, 6th ed. (1960), pp. 306-307.

हिन्दुर्बौद्धो वा न स्यात् ख्रीष्ट-धर्मावलम्बी, किन्तु सर्व एवान्येषां धर्माणा-मन्तर्निहितमर्थं जानीयुः ; पुनः स्वकीयतामक्षुण्णां संरक्ष्य स्व-स्वभावा-नुसारं धर्मस्य वृद्धिं विदध्युः। धर्मसम्मेलनेऽस्मिन् यदि किमपि प्रमाणी-कृतं, तदिदमेव—

पवित्रता साधुचरित्रता च
दयाऽथ दाक्षिण्यमुदारता च ।
नामी गुणा धर्मविशेष-सम्पत्
किन्त्वासते तेऽखिलधर्ममार्गे ॥ १०४
सन्त्येव केचित् पुरुषा महान्तः
स्त्रियश्च काश्चित् प्रतिधर्ममार्गम् ।
तस्मादहङ्कारवता न भाव्यं
मत्वा महान्तं निजमेव धर्मम् ॥ १०५

अस्माकं पुरत एव विराजति प्रमाणेऽस्य यदि कोऽपि मन्यते यत्तस्य धर्म एवान्यान् सर्वान् धर्मानुच्छिद्य केवलं शोभिष्यतेतमां तदाऽसौ निश्चितम् अस्माकं सर्वेषां दयाभाजनम् ।

तस्मादेतदेव मम निवेदनीयं यत्तादृशानां जनानां बाधासत्त्वेऽपि प्रति-धर्मपताकं सुवर्णाक्षरैर्जाज्वल्यमानं राजिष्यते मतमिदं—"विवादो नहि, सहयोगिता; विनाशो नहि, परस्पर-भावग्रहणं ; मतविरोधो नहि, शान्ति समन्वयौ"। (१)

(१) "The Christian is not to become a Hindu or a Buddhist, nor a Hindu or a Buddhist is to become a Christian. But each must assimilate the spirit of the others and yet preserve his individuality and grow according to his own law of growth......

"If the Parliament of religions has shown anything to the world, it is this : It has proved to the world that holiness, purity, and charity are not the exclusive possessions of any church in the world, and that every system

स्वामिमहाराजो यदैव सम्मेलनवक्तृतामञ्चस्य पार्श्वात् पार्श्वान्तरमगच्छत्, तदैव सर्वेषां स्वतः स्फुरितमभिनन्दनं तत्रभवानलभत। आमेरिकावासिनः सत्यमेव तं मनोमन्दिरे वरेण्यधर्मनेतृरूपेण वासयामासुः। निउइयर्क हेराल्ड्-पत्रिका स्वामिमहोदयमभिनन्द्य प्राह—"चिकागोधर्मसभाया अविसंवादिश्रेष्ठपुरुषः स्वामिविवेकानन्द एव। तत्रभवतो वक्तृताश्रवणाद्विश्वासः प्राजायत यत्तज्जन्मभूमौ भारतवर्षे धर्मप्रचारार्थमस्माभिः प्रचारकाणां प्रेरणं नितान्त-निर्बुद्धिताप्रसूतम्"।

बहुषु धर्मीय-पत्रिकासु तस्य वक्तृतादिकमाद्योपान्तं मुद्रितमभवत्। "वोष्टन् इभिनिं ट्रानस्क्रिप्ट्" पत्रिकायां लिखितमासीत्—"यथा सर्वे सभासदो धर्मसम्मेलनकक्षं न त्यजेयुः, तदर्थं सभाह्वायकानुरोधक्रमेण स्वामिमहाराजो दिवसस्यान्तिमभागे एव भाषणदानार्थं सम्मतोऽभवत्।

एकदा अधिवेशनकाले घर्मो वरीवर्ति; तात्कालिकवक्तुर्वक्तृता च नासीद् हृदयग्राहिणीति हेतोः सहस्रशः श्रोतारो बहिर्गमनोन्मुखा बभूवुः, बहवश्च बहिर्गता आसन्। तदैव सभापति-महोदयो दण्डायमानः प्राह आशीर्वादवाणी-पाठात् प्रागेव स्वामिमहोदयस्य संक्षिप्तभाषणं भवितेति। फलेन बहिर्गमनोन्मुखा अपि जना दिवसावसानपर्यन्तं न बहिर्जग्मुः, बहिर्गताश्च सर्वे सभाकक्षं पुनरागच्छन्। सर्वे ते सुदीर्घकालमतिष्ठन् केवलं स्वामिमहाराजस्य स्वल्पभाषणश्रवणाय। यत् किल सर्वश्रेष्ठं तदवसानकालायैव संरक्षितव्यमिति कालादृता रीतिः सभापति-महोदयस्य सुष्ठु ज्ञातासीत्"।

---

has produced men and women of the most exalted character. In the face of this evidence, if anybody dreams of the exclusive survival of his own religion, and the destruction of the others, I pity him from the bottom of my heart, and point it out to him that upon the banner of every religion will soon be written, in spite of his resistance: 'Help and not fight', 'assimilation and not destruction' 'Harmony and peace and not dissension'".

Vide pp. 310—311, op. cit.

पुनरप्यत्रैव पत्रिकायां लिखितमासीत्—सम्मेलने प्रदत्तं स्वामि-विवेकानन्दस्य भाषणम् अस्मन्मस्तकोपरि विराजमानाकाशवदासी-द्विस्तृतं दिगन्तप्रसारितम् । तस्य वाण्या मर्मकथासीत्—विश्व-जनीनधर्मादरः सर्वधर्माणां श्रेष्ठवस्तुपरिग्रहणञ्च इति । विहाय पुरस्कार-प्रत्याशां दूरीकृत्य च दण्डस्याशङ्कां सर्वमानवानां सेवा करणीया, सर्वेषां कल्याणसाधनञ्चावश्यमेव करणीयमिति । स्वामिमहोदयस्य भावावेग-माधुर्यं तस्यानिर्वचनीय-कान्तिश्च—एतदुभयसमावेशप्रभावेणासौ सम्मे-लनस्य सर्वेषां प्रीतिभाजनमभवत् ।

विश्वधर्म-महासम्मेलनस्याङ्गीभूतमासीद्विज्ञान-सम्मेलनम् । अस्य सभापतिरासीत् श्रीस्नेल्महोदयः (१) । तेन "पाइओनियर"-पत्रिकायां लिखितमासीत्—

**समायातो हिन्दुप्रतिनिधितया भारत-भुवो**
**विवेकानन्दो यस्तरुण-यतिराड् वश्यवचनः ।**
**तदाख्यातो धर्मः परमतसहो हिन्दुकलितो**
**वितेने यच्छ्रैष्ठ्यं न तदपरधर्मोऽत्र सदसि ॥ १०६**

हिन्दुधर्मस्यैक आदर्श-प्रतिनिधिः स्वामि-विवेकानन्द एवास्य धर्मसम्मे-लनस्य निःसन्देहं प्रेष्ठः श्रेष्ठश्च जनः । ......स्वामि-विवेकानन्दसदृश-कतिपयादर्शपुरुषलाभायाऽऽमेरिका प्रार्थयते किलेति ।

चिकागोधर्मसभाया अवसानानन्तरं स्वामि-विवेकानन्दमहाराज आमेरिकामहादेशस्य नानाप्रदेशेभ्य आमन्त्रित आसीद्भाषणदानाय । एतदुपलक्ष्य स्वामिमहाराजः आइओयासिटि–इण्डियानापोलिश-सेन्ट-लुइ-डेट्रयेट्-हार्टफोर्ट-वाफेलो-वोष्टन्-प्रभृतिनगरेष्वगच्छत् । (२) तत्र तत्र सुप्रचारितम् आसीच्च तेन हिन्दुमहाधर्ममाहात्म्यम् । तदर्थञ्च निखिले

१) The Hon'ble Mr. Merwin-Marie Snell.

२) Iowa City, Indianapolis, St. Louis, Detroit, Hartford, Buffalo, Boston, etc. For a fuller list, see Life of Swami Vivekananda, 6th ed., p. 516.

तस्मिन् महादेशे वेदान्तदर्शनमेवासीत् स्वामिमहोदयस्य प्राधान्येनोपजीव्यम् । सर्वत्रैव स्वामिमहाराजस्य वक्तृतासमये विद्वज्जनानां तथा चान्येषां सहस्राणि उपस्थितान्यासन् ।

स्वामिमहोदयस्य समधिकजनप्रियता ख्रीष्टीयधर्मयाजकानां चक्षुःशूलमिवाजायत । ये किलासभ्य-भारतीयान् सुसभ्यान् कर्तुं प्रेषयामासुर्धर्मयाजकान् शतशः सहस्रशो वा, धनमदगर्वितानां यान्त्रिक-सभ्यता-विलासिनां तेषां कथं वा तादृशो भावो नोपजायेत ? किन्तु परमविस्मयस्य कारणमेतत्—निश्चितं दुःखस्य च, यत् स्वामिविवेकानन्दस्य विद्वेष्टृषु कस्यचन प्रगतिशील-भारतीयधर्मस्य प्रतिनिधिरप्येकोऽवर्ततेति । विश्वधर्ममहासम्मेलनस्य कर्तृपक्षैः स्वामिविषये पृष्टः स प्राह, स्वामिविवेकानन्दः क्षमता-मर्यादाहीन-धर्मसम्प्रदायस्य कस्यचनान्तर्गतो भण्ड एव । सौभाग्यात् कर्तृपक्षा एतस्य मतमसत्यममन्यन्त स्वामिमहोदयस्य प्रतिभोद्दीप्त-गौरवमण्डितरूपसन्दर्शनाद् अभ्युन्नतालोचनपाटवाच्च ।

विलक्षणमिदं वपुर्नयनतर्पणं पश्यतां
निरीहजनसम्मतो विमल एष देशग्रहः ।
इदञ्च हृदयङ्गमं किमपि पाटवं भाषणे
न भण्डहृदये जने कृतपदानि सन्ति क्वचित् ॥ १०७

प्रकृतप्रतिभा न कदापि हिंसाविद्वेषादिभिर्नश्यति । तत्र प्रकृतं प्रमाणं स्वामिमहाराज एव । आमेरिकावासिनः "थिओसफिक्याल्-सोसाइटी"-नेतारः स्वामिमहोदयस्यावमाननायै आकाशपातालमालोडयामासुः । तेन केवलं समुद्रकल्लोलेन पवनान्दोलनेन च दिग्दिगन्तरेषु स्वामिमहाराजस्य कीर्तिगाथा द्रुततरगत्या प्रचचार ।

कीर्तिस्तस्य द्रुततरगतिः प्लावयित्वा प्रतीचीं
प्राच्येऽप्याशु प्रणयमकरोत् तीर्ण-दुर्लङ्घ्य-सिन्धुः ।
तत्राप्यस्य स्वजनन-भुवं भारतं संविशन्ती
प्रान्तात् प्रान्तान्तरमुपगता ग्रामतो ग्राममन्यम् ॥ १०८

स्वामिमहोदयस्य राजशिष्यौ रामनादाधिपति-भास्करवर्मसेतुपतिः खेतडि-महाराजाजितसिंहश्च प्रकाश्य-सभास्थले सह प्रजाभिरानन्दो-द्वेल्लितौ ननृततुरिव । महती सभाऽनुष्ठिता माद्राजप्रदेशे राज-स्यार्-रामस्वामि-मुदलियर्-देवानबाहादुर-स्यार्-सुब्रह्मण्य-आयार्-महोदययो-र्नेतृत्वेन । 'कलिकाता-टाउनहले'ऽपि व्यधायि विशाला सभा राज-प्यारीमोहन-मुखोपाध्याय-साभापत्येन ।

यद्यपि प्रथमदिन एव स्वामिमहाराजाय राजकीयः सत्कारः प्रदत्त आसीच्चिकागोनिवासिना केनचित् राजोपम-जनेन स्वीय-प्रासादतुल्य-भवने, तथापि स्वामिमहोदयस्य हृदये तु शान्तेः सुखस्य च पूर्णाभाव आसीत् । तत्र कारणं भारतस्य असीमदुरवस्थाचिन्तनम् । निशीथिन्या गभीरतमेऽंशे स्वशयनकक्षस्य वातायनपार्श्वे दण्डायमानः चिकागोनगरस्य अननुमेय-समृद्धिं वीक्षमाणो रोदनतत्परः स इत्थं चिन्तयति स्म—

> किं भविष्यति यशः-पताकया
> व्याप्तया निखिल-विश्वमण्डले ।
> यन्ममास्ति जननी तपस्विनी
> जन्मभूमिरतिदुर्दशाकृशा ॥ १०९
>
> संवृतान्धतमसेन सन्ततं
> कान्दिशीक-दशया समाकुला ।
> शिक्षयाऽन्न-वसनैस्थापि सा
> न क्षमा घटयितुं स्वसन्ततीः ॥ ११०

अहो मम देशवासिनामवर्णनीय-दुःखं येऽनशनक्लिष्टा मुष्टिपरि-मितमपि अन्नं न प्राप्नुवन्ति तथापि समौनं चिराय करालकालग्रस्ता भवन्ति । अन्यत्रत्वेतेऽत्र स्वसुखभोगलालसा-चरितार्थतायै लक्षशो मुद्रा व्ययन्ति अनायासमकातरम् । अहो को नु भारतवर्षस्य प्रकृत-तारकः स्यात् ? को दरिद्र-भारतवासिनामन्नदाता भविष्यति ?

पन्थानमीक्ष्य सुतं जगदीश्वरि त्वम्
अप्यास्तृतं सुनिशितायसकण्टकाग्रैः ।
दारिद्र्यपिष्टवपुषो मम भारतीयान्
उद्धर्तुमुत्पथमपि प्रणयाद् ग्रहीष्ये ॥ १११

इत्थं विचिन्त्य क्रमेण स्वामिमहाराजो मूर्छामवाप।

मूर्छान्ते स्वामिमहाराजस्य हृदीयं चिन्ता जागरिताऽभूत् "निश्चितं भारतवर्षस्य परमहिताय पाश्चात्त्यदेशात् साहायकं ग्रहणीयम्। किन्तु प्रतिदानहीनम् आदानं कदापि न संभाव्यते। प्रतिग्रहणाय दानमप्यवश्यं करणीयम्। भारतवर्षस्य विश्वेऽतुलनीया सम्पद् धर्मो नाम। पाश्चात्त्य-देशीय-दानं भारतवर्षस्यामूल्यधर्मधनविनिमयेनैव ग्रहीतव्यं स्यादि"ति।

अतः स्वामिविवेकानन्दः सर्वथा समधिकतया भारतीय-धर्ममर्म-प्रचाराय व्यग्रो बभूव। इतो मध्ये तस्य प्रगाढ-ज्ञान-भक्ति-कर्ममहिम्ना समाकृष्टौ आमेरिकास्थौ द्वौ विश्वविद्यालयौ--हार्भार्ड् विश्वविद्यालयस्तथा कलम्बिया-विश्वविद्यालयश्च — तं दर्शन-धर्मशास्त्राध्यापकपदग्रहणाय अनुरुरुधतुः। किन्तु—

कर्मक्षेत्रं प्रशस्तं जगदिदमखिलं वर्तते यं प्रतीक्ष्य
स्याद्बद्धो महात्मा कथमिव स लघौ विश्वविद्यालयेऽत्र।
मन्ये धात्रा तदीये हृदि कथितमिदं पूर्वमेव प्रविश्य
प्रत्याख्यातं ततस्तद् द्वितयमपि पदं स्वामिराजेन सद्यः॥ ११२

अथ स्वामिमहाराजः 'निउइयर्क'-नगरस्य बहुषु स्थानेषु भाषणानि दत्तवान्। फलेन बहवो मनीषिणोऽन्ये च धर्मप्राणा जनास्तं प्रति भूयसा समाकृष्टा बभूवुः। एतेषामनुरोधक्रमेण संसृष्टासीत् १८९४ ख्रीष्टाब्दे 'निउइयर्क'-नगरस्थ-वेदान्तसमितिः ( Vedanta Society, New York, 1894 )। ये शिष्यास्तस्य शिक्षादानमहिम्ना परम-समाकृष्टा वित्तानि तथा चान्यानि सर्वाणि समुत्सृज्य विश्वधर्ममतसंप्रचार-संप्रसारणार्थमात्मसमर्पणोत्सुकाः पूर्णतया बभूवुः तेषामेव विशेषेण

प्रयोजनमासीद्वेदान्तसमितिस्थापनाय। ये भक्तिप्राणा अस्मिन् समये स्वामिमहोदयस्य शिष्यत्वं स्वीचक्रुः, तेषु मिस्-ओयाल्डो—मिसेस्-ओलिवुल्—डाः-एलन्-डे—अध्यापक-राइट्—म्याडाम्-मेरी-लुइ-हेर-लिअँ-ल्याण्ड्स्वार्ग-प्रभृतीनां नामानि विशेषेणोल्लेखयोग्यानि। 'मेरी-लुइ' (Marie Louise) दीक्षान्ते स्वामि-अभयानन्द-नाम्ना, लिअँ-ल्याण्डस्-वार्ग् (Leon Landsburg) च स्वामि-कृपानन्द-नाम्ना विभूषितावास्ताम्। (१)

वेदान्तसमितेः प्रथम-सभापतेः फ्रेन्सिस् एइच्. लेगेट् (Francis H. Leggett) महोदयस्य साहायकं चिरस्मरणीयमेव। अतः परं वेदान्ते आस्थाशीलाः शिष्यास्तस्य न केवलं संख्यया भृशं ववृधिरे, परन्तु ते आमेरिकाया विभिन्नाञ्चलेषु—पूर्वाञ्चलात् पश्चिमाञ्चलप्रान्त-भागीय-कालिफोर्णियापर्यन्तं सर्वत्र—द्वादशसंख्यकानि वेदान्त-प्रतिष्ठानानि स्थापितवन्तः।

न केवलं वेदान्तप्रचारविषयक-साहायकविधानेन, परन्तु विविधोपायान्तरैरपि एत आमेरिकावासिनः शिष्यास्तेषां गुरोर्विवेकानन्दस्य साहाय्यं कृतवन्तः। तत्रार्थ-साहाय्यमन्यतरन्महत्। वेलुडमठस्य स्थापनं सम्भावितमासीदामेरिकार्थसाहाय्यलाभेनैव।

एषु दिवसेषु भारतवर्षस्य कष्टनिवारणार्थं, भारतीय-जनानां शिक्षा-दानसौकर्यसम्पादनार्थं—फलतः कालक्रमागत-दोषापनोदनपूर्वकं प्रत्येकं भारतीय-जनानां सुखसंविधानार्थञ्च स्वामिमहाराजः सततं चिन्तयामास, सर्वं व्यवस्थापनञ्च तदर्थं चकार। अत्र स्वामिमहोदयस्य प्रथम उपाय आसीद्धापणदानं द्वितीय आमेरिकावासिशिष्यजनेभ्यो धर्मज्ञान-वितरणं तृतीयश्च भारतवर्षे स्वकीय-भावधारासंवलित-निरन्तर-पत्रादि-संप्रेषणं—विशेषेण गुरुभ्रातृजनानुद्दिश्य।

(१) एतेषां जीवनवृत्तान्तविषये ज्ञानलाभाय Life of Swami Vivekananda ग्रन्थस्य ३४९ पृष्ठं द्रष्टव्यम्।

अहो स्वामिमहाराजस्य भाषणोत्कर्षः ! हार्भार्ड-विश्वविद्यालय-दर्शनविषयाध्यापकः रेभारेण्ड्-एभारेट्-महोदयः (Rev. C. C. Everett) दर्शनविभागीय-सभायां तस्य परिचयदानकाले विश्वविद्यालयस्याध्यापकान् छात्रांश्चोद्दिश्य प्राह—यो वेदान्तधर्मोऽस्मभ्यं बहुदूरदेशीय-वस्तुवत् प्रतिभाति, तस्य वेदान्तशास्त्रस्य प्रतिनिधिरूपेण वयमगाधपाण्डित्याधिकारिणं योगिवरमेकं प्राप्तवन्तः, सत्यमेतत् परमसौभाग्यमेवास्माकम्। वयं पाश्चात्त्यदेशवासिनो 'बहु'माश्रित्य व्यस्ताः स्मः; किन्तु यदि सत्यं वयं 'बहोः' समाश्रयस्थल'मेकं' न तथ्यतो जानीयाम, 'बहो'रुपलब्धिरपि न सम्भविष्यत्येव कदाचनास्माकम्। 'एकम्' इत्येतद्विषये प्रकृष्टशिक्षादानसमर्थः प्राच्यदेशः; स्वामिविवेकानन्दमहोदयस्तैत्सत्यबोधविषयेऽस्माकं ज्ञानोद्बोधं कृतवान्—तदर्थं वयं तं प्रति नितरां कृतज्ञाः स्म इति।

ईदृश-गुरु-कर्तव्यभारवहनहेतोः स्वामिमहाराजस्य देहः श्रान्तिं क्लान्तिञ्च भजते स्म। तद् दृष्ट्वा स्वामि-महाराजस्य शिष्याः सर्वे तस्य विश्रामलाभार्थं तं 'सेन्ट्-लरेन्स्'नदीवक्षःस्थ-'थाउजेण्ड्-आइल्याण्ड्-पार्क' नामकस्थाने (१) संप्रेषयामासुः। तत्र स्वामिमहाराजः कस्याश्चन शिष्यायाः परममनोरमे कुञ्जकुटीर उवास। अत्र तेन सहासन् कतिचन शिष्याः। परमानन्देन स्वामिमहोदयेनात्र सप्ताहसप्तकं व्ययितम्।

कृत्यानि भोज्यपरिवेशन-रन्धनादी-
न्यासन् स्वयं सुविहितानि हि शिष्यवर्गैः।
येनेह धाम्नि तपसः शुचितैकसारे
कुर्यात् पदं न बहिरागतमस्थिरत्वम् ॥ ११३

१) Thousand Island Park, the largest island in the St. Lawrence River. Miss Dutcher invited the Swamiji to this Thousand Island Park. For details, see Life of Swami Vivekananda, 6th edition, pp. 355 ff.

स्वामिमहाराजः स्वयं सुपाचक आसीत्। ततस्तत्रभवान् स्वयं बहुविध-पक्वद्रव्यैः शिष्यवर्गस्य परमानन्दं उदपादयत्। अत्र स्वामि-महाराजस्य मुख्यं कृत्यमासीत् ब्रह्म-सूत्रभगवद्गीताप्रभृतिसद्ग्रन्थ-व्याख्यानमुखेन शिष्येभ्यः शिक्षादानम्। वेदान्तविषयक-शिक्षादान-प्रसङ्गे विशेषेणोल्लेखयोग्यमेतद्यत् स्वामिमहोदयो द्वैत-विशिष्टाद्वैताद्वैत-मतानि सम्यक्तया शिष्येभ्यो व्याख्यातवान्। अद्वैतवेदान्तस्य दुर्विगाहं स्वरूपं शिष्याणां कठिनं प्रतिभाति स्म ; केषाञ्चित् रामानुज-वेदान्तेऽपि आसीदनुरागाधिक्यम्। एवं पर्यालोचितमासीत् स्वामि-महोदयेन नारदभक्तिसूत्रम् ; तथा स्वगुरोः श्रीरामकृष्णपरमहंसदेवस्य अमृतमय-जीवनचरितम्। सान्ध्यसमये घटिकात्रयं यापितमासीत् प्रायेण स्वामिमहोदयेन शिष्येभ्य उपदेशदान-प्रसङ्गेन ; कदाचन तु दीर्घतमः समयोऽपि स्वामिमहोदयेन यापित आसीत् शिक्षादान-हेतोः। किमधिकं सायंकालात् प्रत्यूष-पर्यन्तमपि समयो यापितः— किन्तु कतिपयानामेव ज्ञातमासीत् तत् संघटनम्।

मिस् एस्. ई. ओयाल्डो-महोदययैतेषां (१) मनोरम-दिवसानां स्मृतिर्लिखिता। परमनिष्ठया सा लिखति स्म किल भूतार्थं—स्वामि-महोदयस्य वाक्यान्यासन् अग्निगर्भाणि ; जाज्वल्यमानानि तान्यशोभन्त श्रोतॄणां हृत्कन्दरेषु—अविस्मरणीयानि सर्वथा किल। स्वामिमहोदयस्य परममहत्त्व-ममत्व-पूर्णरूपं समयेऽस्मिन् यथाऽदृश्यत न तथाऽन्यस्मिन् समये ; अथवा स्वामिमहोदयस्यैतदाचरणं तदीय-गुरोः शिक्षा-दान-पद्धतेरनुरूपमासीत्—सदानन्दरसपानविह्वलानामेषैव रीतिः। शिष्याणां संख्याऽत्राऽऽसीत् केवलं द्वादशमात्रम्। तथापि स्वामिमहो-दयस्य दिवसस्य सर्वक्षणेषु प्रचुरोत्साहः समस्तेव पर्यलक्ष्यत ; स्वामि-महोदयस्य हृदये एष महान् भावोऽजायत यत् सर्वे एव द्वादश शिष्या भवेयुः महिष्ठा गरिष्ठा वरिष्ठाश्चेति।

१) Miss S. E. Waldo. For details, see op. cit. pp. 357-358.

एतेषां द्वादशसंख्यकानां शिष्याणां द्वावास्तां संन्यासि-रूपेण परिगृहीतौ स्वामिमहाराजेन, पञ्च चासन् ब्रह्मचारिरूपेण ।

सहस्रद्वीपोद्यानविषयक-वृत्तान्ते मिसार्स-फाङ्कमहोदयायास्तथा च मिस् क्रिष्टिन्-ग्रिनस्टिडेल्-महोदयायाश्च (१) नामनी अवश्यमेव स्मर्तव्ये । सुदीर्घः सार्धवत्सर-समयस्ताभ्यां नीत आसीत् डेट्रइट्-नगरे स्वामिमहाराजस्य वाक्यश्रवणानन्तरं ; समयेऽस्मिन् बहुधाऽन्वेषणञ्च कृतम् ; किन्तु तस्य दर्शन-सौभाग्यं न लब्धम् । अथान्वेषण-क्रमेण ताभ्यां भक्तनारीभ्यां समागतमासीत् सहस्रद्वीपोद्याने लब्धञ्च परमसौभाग्याद् गभीरयामिन्यां झञ्झावातविक्षुब्धायां स्वामिमहाराजस्य दर्शनम् । दीर्घजल्पितमपि भाषितमेकस्याः स्वामिमहाराजस्य दर्शनाद् दूरं गतम्, गद्गदभाषया सा किञ्चिन्मात्रमुवाच । अन्या च केवलं प्राह—"यदीदानीं खीष्टमहोदयोऽजीविष्यत् तर्हि यथावां तत्सकाश-मगमिष्याव तद्वदावां द्वे भवत्समीपं समागते, शिक्षणीये च भवता"। स्वामिमहाराजः परमकरुणाभरेण प्राह—"अहो यदि मम तद्वज्ज्ञानम् अभविष्यत्, निश्चितमहं झटित्येव युवयोर्मुक्तिमसाधयिष्यम्"।

एवं क्रमेण स्वामिमहोदयेन जुन्-मासस्य ऊनविंशदिवसात् आगष्ट-मासस्य षष्ठदिवसपर्यन्तं शिष्येभ्यो बहुविधां शिक्षां दत्त्वा पुनर्निउ-इयर्कनगरं प्रति प्रतस्थे । अत्र दत्तानां भाषणानां कानिचित् संलिखितानि आसन् ; तानि पश्चाद्देववाणी ( Inspired Talks ) समाख्यया प्रकाशं नीतानि । एतानि भाषणानि मिस्-ओयाल्डोमहोदयया लिखितान्यासन् । सत्यं नु ग्रन्थस्य सार्थकं नामकरणं "देववाणी" इति । यतो दिव्यस्फूर्तिरत्र संलक्ष्यते प्रत्यक्षरं, दिव्यावदानं प्रतिपदं, दिव्यानन्दास्वादनञ्च ग्रन्थस्य सर्वत्र प्रतिपदं प्रत्यक्षरं प्रतिबिन्दु-विसर्गञ्च । अस्मिन् द्वीपोद्याने स्वामिमहोदयस्य निर्विकल्पसमाधि-

१) Miss Funke and Miss Christine Greenstidel ; vide op. cit., pp. 359 ff.

रप्यजायत यथा श्रीपरमगुरु-परमहंसजीवद्दशायामेकदाऽभवत् काशीपुरधाम्नि। सर्वे शिष्या अन्वभवंश्च यथा स्वामिमहाराजः श्रीगुरुसकाशे गङ्गातीरे न्यवसत् पारमहंस्यरसपानधन्यः, तद्वत् तेऽपि तेषां गुरुसकाशे सेन्ट्-लरेन्स्-तटिनीकूले। पार्थक्यं केवलं समये, बहुसहस्रक्रोशमितदूरत्वे—न तु रसास्वादनगौरवे सत्यवस्तुनः।

स्वामिनेऽभेदानन्दाय सहस्रद्वीपोद्यानाल्लिखिते एकस्मिन् पत्रे स्वामिमहोदयेन स्वमतमेवं प्रकटीकृतं यद् व्यक्तित्वमेव स्यात् जीवनादर्शीभूतं सर्वेषाम्। स्वामिमहोदयः स्वयं सर्वस्वत्यागी संन्यासी इति हेतोः सर्वेषां सेवायामेव तस्याधिकारो न तु कर्तृत्वे इति। द्वीपादस्मात् कस्मैचन ख्यातनाम्ने भारतवासिने स्वामिमहाराजो लिलेख—

मुक्तोऽहमस्मि गलितं मम बन्धनञ्च
तस्मादिदं मम वपुर्म्रियते न वेति—
का मे क्षतिः, परम्हो भगवच्छिशोर्मे
सत्यस्य शिक्षणमिहाद्धयमस्ति कर्म ॥ ११४

पृथिव्याः परमसाहसिक-वरणीयतमेभ्यः कांश्चन यो मह्यं प्राग् दत्तवान्, स एवाग्रेऽपि मदर्थं सहकर्मिरूपेणान्यानपि कांश्चन संप्रेषयिष्यति।

सहस्रद्वीपोद्याने आनन्दसागरनिमग्नोऽपि स्वामिमहाराजः क्वचित् क्वचिदशान्तिमभजत। तथा च एकदा स्वामिमहाराजस्य सकाशे कोऽपि लिखितवान्—तस्य कार्यं प्रचरतु नाम दरिद्रजनेषु, न धनिजनसमाजे। तद्दिवस एव प्रत्युत्तरमुखेन संन्यासी महाराजः 'संन्यासिगीति'-समाख्य-श्लोकमालां विरचय्य पत्रसंप्रेषकसकाशे संप्रैषयत्। सेयं संन्यासिगीतिः स्वामिमहाराजस्य विरचनेष्वन्यतमा श्रेष्ठा कृतिरिति स्वीक्रियते पण्डितसमाजेन (१)।

1) The song of the Sannyasin ; see p. 370 of the Life of Swami Vivekananda for a few extracts only.
"Strike off thy fetters ! Bonds that bind thee down,
Of shining gold, or darker, baser ore ; etc. etc.

स्वामिमहाराजस्य इंलण्ड-देश-कृत्यानि

आमेरिकातः स्वामिमहाराजः 'प्यारिस'-नगरीमाजगाम आगष्ट-मासस्यान्तिमे भागे। ततः सेप्टेम्बरमासस्य दशमे दिवसे इंलण्डदेश-मागच्छत्। इंलण्डदेशागमनानन्तरं स्वामिमहाराजोऽभिनन्दित आसीत् ष्टार्डि-महोदयेन श्रीमत्या हेनरियेटा-मुलार्-महोदयया च। मुलार्-महोदयया सह इतः पूर्वमामेरिकादेशे स्वामिमहाराजस्य साक्षात्-कारोऽभूत्। गृहाद् गृहान्तरं स बन्धुभिर्नीत आसीत्। दिवसभागे स्वामिमहाराजो दर्शनीयस्थानेष्वगच्छत्; सान्ध्यसमये शिक्षादानाय मनो दधे पाठ-वक्तृतादिमुखेन। क्रमेण तस्य यशोगाथा सर्वत्र परि-कीर्तिता बभूव, यत्फलेन "ओयेष्ट्-मिनिष्टार्गेजेट्"-"ष्टयान्डार्ड्"-प्रमुख-पत्रिकाविभागात् केचन साक्षात्कारमयाचन्त। 'हिन्दुयोगी'ति नाम्ना स परिचितस्तदासीत्। 'इ-टि-ष्टार्डि'-महोदयो भारतवर्ष-विषये आसीत् परमोत्साही कौतूहली च; योगसाधनतत्परोऽसौ हिमालय-मध्युवास च। अस्य प्रयत्नबलेन लण्डननगरे स्वामिमहाराजस्य परि-चितिरजायत भूयसी। स्वल्पदिनात्यये लेडी-इसावेल्-मार्गेसन्-प्रभृति-समाजधन्य-नारीणामुपस्थितिश्च समुल्लेखयोग्या। दिवसयामिन्यौ सायं प्रातस्तु स्वामिमहाराजः स्वपरिकल्पनासार्थक्यावाप्तयेऽमानुष-श्रमं स्वीचकार।

अक्टोबर-मासस्य द्वाविंशदिवसे सायं पिकाडिलीस्थे प्रिन्सेस्-सभागृहे "आत्मज्ञान"-विषये भाषणदानाय स्वामिमहाराजः समाहूत आसीत्। तस्य भाषणं स्थायिफलजनकं बभूव। "लण्डन-डेइली-क्रनि-कल"-पत्रिका मन्तव्यविधया लिलेख—श्रीबुद्धसदृश-वदनकमलधारी जनप्रियहिन्दुसंन्यासी विवेकानन्दः कथितवान्—पाश्चात्त्यानां वित्त-वाणिज्यम्, तेषां रक्ताप्लुत-युद्धम्, असहिष्णु धर्ममतम्—किञ्चनापि शान्तभारतवासिनां न लक्ष्यीभूतम्। एतत्त्रयसमृद्धा सभ्यता निरर्थिकेति।

वृटिश-शासनाधीन-भारतवासिनः कस्यचनेदृशोक्तिः साहससूचिकेति ज्ञात्वापि तत्रत्या जनाः स्वामिमहोदयस्य सरलमुग्ध-ममत्वमय-वदनारविन्दं तस्य विश्वहितसाधनतत्परताञ्चावलोक्य स्वामिमहोदयं प्रति समासक्ता बभूवुः। एतद्भापणदानानन्तरं स्वामिमहोदयो लण्डननगरे मासमात्रमासीत्। तस्मिन्नवसरे केचन ज्ञानगुणगरिष्ठा जनास्तस्य गुणज्ञानगरिममहिमविमुग्धा आसन्। एतेषामन्यतमाऽऽसीत् कुमारी मार्गारेट् नोवल्, सा परवर्तिकाले भगिनी-निवेदिताख्यया निखिले विश्वमण्डले परिचितिं लेभे। लण्डनस्थ-सिपेमक्लावस्य स्वनामख्याता सभ्या सा तदा लण्डननगर्यां स्वप्रतिष्ठितस्य विद्यालयस्य प्रधान-शिक्षयित्री आसीत्। स्वामिमहोदयोऽज्ञानात् काममेषाऽद्य कथञ्चित् सन्देहपरायणास्ते, तथापि संसाधितेऽस्या मतदार्ढ्ये पश्चादियमेव तस्या-तुलनीया शिष्या भविष्यतीति। फलतः, मासाभ्यन्तर एव सा स्वामि-महोदयस्य मतं परिगृह्य तं गुरुरूपेण स्वीचकार।

इंलण्डदेशे स्वल्पसमयावस्थानेऽपि स्वामिमहाराजो न केवलं साधा-रणेषु परं विशेषसमाजवर्तिष्वपि केषुचिज्जनेषु भारतीय-वेदान्तादि-विषयं प्रचारयामास। तुलनाक्रमेण च पाश्चात्त्य-सभ्यताया बहि-श्चाकचिक्यमधिकृत्य तिरस्करणेऽपि न पश्चात्पदो बभूव। मधुरिममय-भाषणेऽस्य सर्वदा व्यराजत कश्चन स्वकमहिमा यः खल्ववर्णनीय एव। विशेषतः समाजभेदेन भाषणभेद उदाहरणभेदश्चासीदस्य रीतिः। कदाचित् उच्चमर्यादासम्पन्ने नारी-समाजे 'प्रेम'विषयकभाषणे स्वामि-महाराजः प्राह, व्याघ्रः सर्वदा सर्वेषां भीतिकारणमित्यत्र कः सन्देहः? किन्तु करधृतपुत्रायाः कस्याश्चन मातुः सम्मुखे व्याघ्रः समायाति चेन्माता सा किं कुर्यात्—युष्माकं या काऽपि? निश्चितं जाने पुत्रं पश्चात्कृत्य माता स्वयं व्याघ्रमुखे पतिष्यतीति। सर्वोपरि आसीत् स्वामिमहाराजस्यातुलनीय-व्यक्तिगत-रसघनाभिव्यक्तिमाधुर्यं यत् सर्वेषां हृदयानि विजित्य तं चिरविजयिनं समुद्घोषयामास।

लण्डनागमनकाले स्वामिमहोदयस्य तत्र भविष्य-कर्मप्रणालीविषयक-धारणासम्पादनम् उद्देश्यमासीत्। किन्तु तत्रागत्य स पुरतो विस्तीर्णकर्म-क्षेत्रमैक्षत। शतशत-कर्मव्यापृतस्याप्यस्य भारतीय-योगिनो जीवनाभिधाने श्रमक्लान्तिरित्यक्षरपंक्तिर्न समदृश्यत; तथापि स माद्राजवासिनं कञ्चन शिष्यमुद्दिश्य लिलेख—इंलण्डदेशाद्बहिर्गमनेन काचित् कर्मक्षतिराशङ्क्यते कैश्चन। अहं पुनर्जानामि न तेन काचन क्षतिः संजनिष्यते। नाहं विश्वसिमि जने वस्तुनि वा, मम विश्वासः केवलं भगवति—यो मां कर्मसु संलिप्तं करोति। ......निरन्तर-कर्मसाधनहेतोर्भृशं परिक्लान्तोऽस्मि; ईदृशावस्थायामन्यो हिन्दुर्नूनं म्रियेतैव। जीवाम्यहं केवलं स्वदेशे दीर्घविश्रामलाभाशयेति।

एतदवसरे स्वामिमहोदयस्य क्षुद्रगोष्ठी-भाषणं श्रुत्वा परमानन्दितः कश्चन पत्रिकाप्रतिनिधिर्लिलेख—भारतीय-भक्तवदुपर्युपरि पादद्वय-स्थापनपूर्वकं ध्यानमौनावलम्बनेन भाषण-श्रवणपराणां लण्डन-नगर्यां विशिष्ट-ललनानां दृश्यं सत्यं किल मनोमोहकरम्। अयं स्वामि-महाराजो यत् प्रेम सहानुभूतिञ्च भारतवर्षीयान् प्रति इंलण्डदेशीयानां मनसि जागरयामास, तेन भारतीय-प्रगतिसंसाधने महत् साहायकं भविष्यतीति। (१)

फलतः स्वामिमहोदयस्य लण्डनपरित्यागात् प्रागेवैतासां नारीणा-मन्यतमा मिस्-मार्गारेट्-नोवल्-महोदया शिष्यारूपेणात्मानं स्वामि-महोदयाय विनिवेद्य भारतवर्षस्य हितायोत्सृष्टजीवना भविष्यतीति

(१) p. 379, Life of Swami Vivekananda :—"It is indeed a rare sight to see some of the most fashionable ladies in London seated on the floor cross-legged...listening with all the Bhakti of an India Chela towards his Guru. The love and sympathy for India that the Swamiji is creating in the minds of the English-speaking race is sure to be a tower of strength for the progress of India"

स्थिरसङ्कल्पा बभूव। परं तस्या मनसि काचन भीतिरप्यासीद् यद् ईदृशो विश्वविख्यातो महात्मा कथं वा तां ज्ञास्यति, ज्ञात्वाऽपि शिष्या-रूपेण तां ग्रहीष्यति न वेति। तथापि सा स्वसंकल्पादस्खलिता दृढं प्रतिजज्ञे—

**आत्मानमस्मै विनिवेद्य नूनं**
**निवेदिता स्यामिति मेऽभिलाषः।**
**क्षुद्रापि यास्यामि तदीयपार्श्वं**
**विज्ञातवृत्ता च भवेयमस्य ॥ ११५**
**ध्यायामि मनसा नित्यं श्रीगुरोः पादपङ्कजम्।**
**पुष्परेणुसमा स्थातुं वाञ्छाम्यानन्द-विह्वला ॥ ११६**
**भारतं जन्मभूमिर्मे इति सञ्चिन्त्य हर्षिता।**
**भारतवासिनी भूत्वा लप्स्ये मोदमनाकुलम् ॥ ११७**
**कदा पश्यामि तं देशं रामकृष्ण-गुरुप्रसूम्।**
**स्वप्नस्य गोचरीभूतं राजन्तं हृदये शुभम् ॥ ११८**
**गुरुदेवस्य निर्देशाद्यापयिष्ये स्वजीवनम्।**
**ब्रिटिशवासिनी नाहं गुरुदेशनिवासिनी ॥ ११९**

स्वामिमहोदयस्यामेरिका-प्रत्यावर्तनम्

इंलण्डावस्थानकाले स्वामिहोदयस्यामेरिकायां प्रारब्धपूर्वं कार्यमभूत-पूर्वसाफल्यविमण्डितं बभूव। तस्यानुपस्थितौ कार्यभारः स्वामिकृपानन्द-स्वाम्यभयानन्द-भगिनीहरिदासीप्रभृतीनां योग्यहस्तेषु संन्यस्त आसीत्। स्वल्पावसरे एव तैः वाफेलो-डिट्रयेट्नगरयोरपि केन्द्रद्वयं संस्थापितम्।

स्वामिमहाराजो डिसेम्बर-मासस्य षष्ठदिवसे शुक्रवासरे पुनरामे-रिकायामाजगाम। स्वामिकृपानन्दसाहाय्येनासौ साम्प्रतं ३९-संख्यक-मार्गे वसतिं चकार। इदानीं स्वामिमहाराजो विशेषेण कर्मयोगविषये भाषणदानतत्परो बभूव। तात्कालिक-वक्तृतासमष्टिरद्यत्वे तस्य



'कर्मयोग'-नामकग्रन्थे परिदृश्यते। केचन ग्रन्थमेतं स्वामिमहाराजस्य ग्रन्थेषु श्रेष्ठतममामनन्ति।

सर्वे स्वामिमहोदयस्य भक्तास्तस्य मूलभाषणानामनुलेखनमेकान्त-प्रयोजनममन्यन्त। एतदवसरे सौभाग्यादिंलण्डदेशतः समागत आसीत् जे. जे. गुड्उइन् इति ख्यातः सांकेतिकलिपिविद् यः पश्चात् स्वामिमहोदयस्य शिष्यत्वमवृणोत्। स्वामिमहोदयस्य वक्तृताराशिं स महता यत्नेनानुलेखनपूर्वकं संररक्ष। गुड्-उइन्-महोदयश्छायावत् स्वामिहाराजं सर्वत्रानुससार। अद्य ये गून्थाः श्रीविवेकानन्दरचना-रूपेण प्रकाशितास्तेषां बहव एवानेन श्रीगुड्उइन्-महोदयेन श्रीस्वामि-महोदयस्य भाषणावसरे साङ्केतिकलेखया संरक्षिता आसन्। वस्तुतः, 'राजयोग'-संज्ञकग्रन्थं विना स्वामिमहोदयस्य स्वहस्तलिखितोऽन्यः कश्चन ग्रन्थो न विद्यते। पत्राणि राजयोगं च विना स्वामिमहोदयस्य भाषणात्मिका अन्याः सर्वा रचना अनुलिखिताः—विशेषेण तदीयशिष्येण श्रीमता गुड्उइन्-महोदयेन।

१८९६ ख्रीष्टाब्दस्य शेषभागे डिसेम्बरमासि स्वामिमहाराजः "ख्रीष्ट्-मास्"-उत्सवमुपलक्ष्य श्रीमत्याः ओल्-बुल्-महोदयाया अतिथिरूपेण "वोष्टन्"-नगरं जगाम। ततः प्रत्यागत्य स १८९७ ख्रीष्टाब्दीय-जानु-यारी-मासस्य पञ्चमदिवसात् प्रारभ्य प्रतिरविवासरं "हार्डेमान्"-समाख्य-सभागृहे भाषणदानरतो बभूव। स प्रतिदिवसं प्रातः सायं च क्षुद्रगोष्ठीषु पाठनरतश्चाभूत्। पाठार्थिसंख्योत्तरोत्तरं ववृधे। जनेषु स्वामिमहाराजो 'वैद्युत-भाषक'-नाम्ना (१) परिचित आसीत्। स्वामिमहो-दयस्य वक्तृताकाले "हार्डेमान्" सभागृहे तिलधारणस्यापि न स्थानमभूत् तथा बहूनां प्रवेशाशाभङ्गश्चाजायतेति हेतोर्द्वितीये वारे फेब्रुयारी-मासि सभागृहनिर्वाचनकाले "मेडिसन्-स्कोयार्-गार्डेन्"-नामकं सार्धसहस्र-

(१) "Lightning Orator"—p. 383, Life of Swami Vivekananda.

जनोपवेशनयोग्यं सभागृहं निर्वाचितमासीत्। स्वामिमहाराजस्तत्र "भक्तियोग"-"गुरुदेव-श्रीरामकृष्णदेव"-प्रभृति-विषयेषु भाषणान्यदात्। फेब्रुयारीमासि भूयोऽपि स्वामिमहाराजो हार्ट्फोर्ड्नगर्याम् "आत्मा भगवांश्च" इत्येतद्विषयमधिकृत्य भाषणं ददौ। एतद्वक्तृताविषये "हार्ट्-फोर्ड्-डेइली-टाइम्स्"-पत्रिकाया मतमित्थमासीत् — "तथाकथितानां बहूनां खीष्टधर्मावलम्बिनां मतेभ्योऽस्य स्वामिमहोदयस्य मतं समधिकं खीष्टमतानुगम्" इति। (१)

१८९६ खीष्टाब्दीय-जानुयारी-फेब्रुयारी-मासयोः स्वामिमहोदयस्य कृत्यविषयमधिकृत्य ब्रुक्लिनस्थ-हेलेन्-हान्टिङ्टन्-महोदया ब्रह्मवादि-पत्रिकायां निबन्धं लिलेख, स्वामिकृपानन्दश्च १८९६ खीष्टाब्दीय-फेब्रुयारी-मासस्योनविंशदिवसे। एवमन्येभ्यश्च सूत्रेभ्यः परिज्ञायते किल — कीदृशेनावर्णनीयेनाध्यात्मबलेन स्वामिमहोदयस्य धर्मप्रचारकार्यमामेरिका-महादेशे सम्प्रसारमाससाद। स्वामिमहोदयस्य मतवादस्य साम्प्र-दायिकताहीनत्वं, व्यक्तिगतजीवनस्य परमपवित्र्यं, सर्वोपरि तस्य चुम्बक-वदाकर्षणशक्तिः सर्वविजयस्य मूलकारणमित्यत्र सर्वेषामेवैकमत्यम्।

वर्षाभ्यन्तरे आमेरिकामहामण्डले स्वामिमहोदयो योगानन्दप्रमुख-संन्यासिशिष्याणां वरणीयो गुरुर्बभूवेत्यत्र किम् आश्चर्यम्? एकत आमेरिकामहादेशस्य भोगप्राबल्यम् अन्यतस्तु संन्यासिनां पूर्णभोग-राहित्यम्! संवादपत्रादिष्वपि स्वामिमहोदयस्य वैयक्तिकमहाशक्तिविषये विविध-संघटनानि प्राकाश्यं नीतान्यासन्। तत्र भोगपरायण-देशे वर्षाभ्यन्तरे संन्यासि-शिष्यत्रयसृष्टिरन्यतमा। वस्तुतो ये प्राथम्येन केवलमनुरागिण आसन्, क्रमेण ते सर्वे शिष्यपदवीभाजो बभूवुः। अन्ये च ब्रह्मचर्यव्रतावलम्बनार्थं परमोत्कण्ठिताः समजायन्त। तत एव स्वामिकृपानन्दो लिखति स्म—'होमार'-जन्मस्थानगौरव-स्पर्धीनि पञ्च-

(१) "His Lectures are more in consonance with those of Christ than those of many so-called Christians."

नगराणि परस्परवादविसंवादरतानि। तद्वच्छ्रीस्वामिजन्मस्थानगौरवप्राप्ति-विषयेऽपि सप्त नगराणि परस्पर-विवादरतानि भविष्यन्ति। हन्त! न जाने, एतद्विवादफलेन अन्यः कश्चन देशस्तज्जन्मस्थान-गौरव-मासाद्य भारतवर्षं स्वामिसदृश-पुत्रलाभरूपाद् गौरवाद्विच्युतं कृत्वा श्रेष्ठरत्नहीनं करिष्यति न वेति। (१)

मिसार्स-एल्ला-हुइलार्-उइल्कक्स्-महोदया १९०७ खीष्टाब्दीय-मे-मासस्य षड्विंशदिवसीयायां निउ-इयर्क-आमेरिकान्-पत्रिकायां द्वादश-वर्षपूर्वसंघटित-वृत्तस्मृतिमाश्रित्य लिलेख— आवां द्वौ केवलं कौतूहल-वशाद् अगच्छाव। किन्तु दशनिमेषाभ्यन्तरे आवां तथा विशिष्टतम-प्राणवद्विस्मयावह-परिवेशसंस्थितावभवाव यन्मन्त्रमुग्धवत् प्रायेण श्वास-प्रश्वासहीनौ भूत्वा भाषणस्योपसंहारकालपर्यन्तं तत्रातिष्ठाव।" पुन-रन्तिमभागे प्रबन्धस्य इयमेव सुप्रसिद्धा आमेरिकावासिनी नारीकवि-र्लिखितवती—स्वामी विवेकानन्दोऽस्मत्सकाशे विशेषवाणीं प्रोद्वहन् समागच्छत्। स बभाषे "नाहं कञ्चन धर्मान्तरितं कर्तुं समायातः; मन्मते—सर्वे स्वस्वधर्मनिष्ठा नितरां भवेयुः ..."। तस्य वाणीप्रभावाद् आपणिकौ बभूव शक्तिमान्; चञ्चला समाजविलासविभवा नारी स्थिरा भावनासंबला; शिल्पी प्रेरणाप्रोद्बुद्धः; पुनः पत्नी-जनन्यौ स्वामि-पितरौ च स्वस्वकर्तव्यविशेषं प्रति समधिकतत्परौ पुण्यव्रत-साधनाग्रयायिणौ च इति। (२)

(१) "The time may come when even as seven cities disputed with each other for the honour of having given birth to Homer, seven countries may claim our Master as theirs, and thus rob India of the honour of producing one of the noblest of her children."—Kripananda.

(२) Mrs. Ella Wheeler Wilcox in New York American of May 26, 1907—"Before we had been ten minutes in the audience, we felt ourselves lifted up into an atmosphere so rarefied, so vital, so wonderful, that we sat spell-bound and almost breathless, to the end of the lectures"......

वेदान्तशास्त्रस्य बहुलप्रचाराय श्रीस्वामिमहोदयेच्छाक्रमेण वेदान्त-सोसाइटी-समाख्या काचन वेदान्त-शिक्षासंस्था प्रतिष्ठापिताऽसीत्। अस्याः संस्थायाः प्रथमसभापतिरासीत् स्वामिमहोदयस्यान्यतमशिष्यो धनकुबेरो मिः फ्रान्सिस् एइच् लिगेट्। तत्र योगशिक्षयित्री सिष्टार्-हरिदासी ; वेदान्तप्रचारकाः स्वामिकृपानन्दाभयानन्द-योगानन्द-(डाः ष्ट्रीट् )-प्रभृतयः। पश्चात् स्थिरीकृतमासीद्यद् भारतवर्षात् स्वामी श्रीसारदानन्दः समागत्य प्रधानपरिचालनाध्यक्षरूपेण तत्र स्थास्यतीति।

सत्यं न्वेतदेवानुपमं माहात्म्यमासीदामेरिकावासिनां यत्ते स्वसभ्यतादिविषये निपुणं तिरस्कृता अपि कदाचन रोषतत्परा न बभूवुः। स्वामिमहोदयस्य निर्मलहृदयं तेषां हृदयान्यपि निर्मलीकृत्य तेषु प्रतिफलितमिव बभूव। अथवा तदेव ध्रुवं महाजातेर्वैशिष्ट्यम्। एकदा वोष्टन्नगरे स्वामिमहोदयः स्वगुरुदेवविषयकवक्तृतादानसमये गुरुदेवविषयकं तथ्यं विहाय पाश्चात्त्यसभ्यताया भोगप्रवणत्व-शारीर-सुखलालसाप्राधान्यादिकं भूयसा तिरस्कृत्य बभाषे। तत्र कारणमासीत् तस्मिन् दिने सांसारिकाणां विषयवासनाप्रमत्तानां श्रोतॄणां बाहुल्यम्। शतशो जनाः सभागृहं परित्यक्तवन्तः। स्वामिमहाराजस्तु निरुद्वेगः स्ववक्तृतामुपसंहृतवान्। परेद्युः संवादपत्रादिषु स्वामिमहाराजः स्ववक्तृता-विषये विविध-भिन्नमतानि परिदृष्टवान्। तत्र केचन सांवादिकास्तं प्रशशंसुः ; केचन वा तस्य स्पष्टवादितां तिरस्कृतवन्तः। किन्तु

"Vivekananda came to us with a message—I do not come to convert you to a new belief, he said, I want you to keep your own belief ; I want to make the Methodist a better Methodist ; the presbyterian a better presbyterian ; the Unitarian, a better Unitarian; I want to teach you to live the Truth, to reveal the light within your own soul'. He gave the message that strengthened the man of business, that caused the frivolous society woman to pause and think, that gave the Artist new aspirations, that imbued the wife and mother, the husband and father, with a larger and holier comprehension of duty."

स्वामिमहाराजः स्वयं स्वभाषणविवृतिं पठित्वाऽनुशोचनानलप्रदग्धो बभूव। अविरलधारयाऽश्रूणि विसृज्य स प्राह—

देवो न मेऽवैक्षत मानवानाम्
अन्याय्यराशीनपि लेशतोऽपि ।
नितान्त-नीचेष्वपि निन्दकेषु
प्रीतिर्महत्यस्य मयाऽनुभूता ॥ १२०
गुरोर्गुणानां सुतरामविज्ञः
क्षमस्तमाश्रित्य कथं प्रवक्तुम् ।
अखेदयं यद् वचनाङ्कुशेन
निर्दोषलेशान् समवेतसभ्यान् ॥ १२१

यथा तथा वा भवतु, स्वामिमहोदयो न कदाप्यामेरिकादेशीयमातृमण्डल्या विरुद्धभाषणं कृतवान्। स्वामिमहोदयस्य जीवनेतिहासे सुवर्णाक्षरैश्चिरं राजिष्यन्ते तानि पुण्यवचांसि यानि स आमेरिकावासिनं नारीजनमधिकृत्य कृतवान्।

वोष्टन्नगरे श्रीमत्या ओलिवुल्महोदयाया अतिथिरूपेण स्थितः स्वामिमहाराजो भारतीयनारीणामादर्श-विषये भाषणं ददौ। भाषणमेतद् ओलिवुल्महोदयाया इच्छाक्रमेण वोष्टन्नगर्या उपकण्ठस्थित-केम्ब्रिज्मण्डलस्य नारीणां कृत एव विशेषेण प्रदत्तमासीत्। भाषणमेतदासीदन्तस्तलस्पर्शि विप्लवप्रसवि देशप्रेमप्रचोदितं च। भारतवर्षीयनारीणां जीवनस्य सौन्दर्य-माधुर्ये अत्र महिममय-गरिम्णा प्रमाणीकृते बभूवतुः। यद्यपि नोद्देश्यपरवशतया, तथापि ध्रुवमेतद्यद् भारतीयनारीणां सम्मानविरोधि-प्रचारमपाकर्तुं स्वामिमहोदयो भृशं यतते स्म। अनेन भाषणेन वोष्टनोपकण्ठस्थ-केम्ब्रिजवासिन्यो नार्य एतादृशीं मुदमुपागता आसन् यत्ताः समासन्नख्रीष्ट्मास्काले स्वामिमहोदयस्य जननीसकाशे जननी-मेरीक्रोड़शायित-यीशुख्रीष्टस्य प्रतिकृत्या सह पत्रमेकं संप्रेषयामासुः। तच्चैवम्—

"स्वामिविवेकानन्दजननीसमीपे

महाशये ! सोऽयं मोहनमधुरः समयो यदा मेरीमातुः श्रेष्ठदानखीष्ट-मधिकृत्य वयं मोदामहे। तत एवायं समयो भवतीमपि स्मर्तुम्। भवत्याः पुत्रोऽस्माभिः सह राजते। ततो वयं भवतीं स्मरामः प्रेषयामश्च भवत्यै हार्दिकमभिनन्दनम्। अस्मद्देशे नरनारीबालानां कृते या सेवा भवत्यास्तनयेन क्रियते तस्या मूलकारणं भवतीति तेन स्वोरःस्पर्शं भारतीयनारीणामादर्शविषयकभाषणे समुद्घोषितम्। ततस्तस्य महात्मनो जनन्याः संपूजनं भविष्यति तदीयश्रोतृवर्गस्य प्रेरणात्मोन्नयनयो-रनुपमहेतुः।

प्रिये महामहिमान्विते ! भवत्याः सन्तानमाध्यमेन तव या जीवन-कृत्यस्य परमदुगतिः संप्रकटिता,तदर्थमस्माकं सर्वासां कृतज्ञतापूर्णमभिनन्दनं गृह्णीष्व। तत्त्वत एव वयं मन्यामहे—भगवतः सम्पर्काद् भ्रातृत्व-मेलनबन्धनाय जगत् सुतरामद्य समुत्कण्ठितमस्तीति। अस्य सत्यस्य प्रतीतिज्ञापनरूपमेतत् पत्रमाध्यमेन प्रेरितमभिनन्दनमिति भवती वेत्तु"॥

श्रीमती ओलिबुल्महोदयाऽपि एतद्भाषणविवरणानुक्रमेण लिखितवती —"वेदेभ्यः, संस्कृतसाहित्यस्यान्यान्यग्रन्थेभ्यो विशेषेण संस्कृत-नाटकेभ्यः समुद्धृत्य, आधुनिकनियमांश्च भारतीय-नारीहितकरान् विश्लिष्य,स्वामिमहाराजो निजजीवने सर्वकृत्यसम्पादनसामर्थ्यार्जनहेतोः स्वमात्रे विशेषेण कृतज्ञतां विज्ञापितवान्। तस्या जीवनस्य पावित्र्यम् आत्मनिगूहन-पूर्ण-प्रेम च स्वामिमहोदयस्य संसारासक्तित्यागविषये मूलकारणमिति च स्वामिमहाराजः स्वयं बभाषे॥"

स्वामिमहाराज आजीवनं मातुः प्रशंसनविषये पञ्चमुख आसीत्। नास्मात् कदाचन तस्यासीद् विरतिः। अस्मिन् विषये कश्चन बन्धु-रलिखद्यत् स्वामिमहाराजः स्वमातुश्चतुर्दशदिवसव्याप्युपवासादि-माहात्म्यं नितरामभाषत। शिष्यवृन्दस्य समीपे स्वामिमहाराजः प्राह— "मद्विषये एतत्सर्वं मातृदत्तमित्यवेहि। मम शुभ-कर्मव्रतोद्यापने मम

मातैव प्रेरणादात्री—तस्याश्चरित्रस्यानुकरणेन सर्वं मया क्रियते ; सैव मां सर्वकार्येषु नियोजयति"—एवमेवम्।

आमेरिकामहादेशे स्वामिमहोदयस्य कार्यकलापं वीक्ष्य सत्यं नु वक्तुं शक्यते—एकाधारे स्वामिवर आसीद् भावेन प्लेटो ; स्पष्टवादितया सेभानेराला ; शिष्येषु चरन् कश्चन महान् बोधिसत्त्वश्च। केचन तं ख्रीष्टं, केचन बुद्धं, केचनौपनिषदमृषिं, केचन वा शङ्कराचार्यं प्राहुः [illegible] र्वे तं नितरां समुच्चतमज्ञानस्याकरं प्राहुरनारतम्। मिष्टभाषणेन, प्रीति-सेवादानेन ज्ञानवितरणेन च सर्वदा स आमेरिकावासिभ्यस्तथा प्रतिभाति स्म यथा स सर्वदा भगवता सह भ्रमणरत आसीदिति।

## इंलण्ड-प्रत्यागतः स्वामिविवेकानन्दः।

१८९६ ख्रीष्टाब्दीय-एप्रिलमासस्य पञ्चदशदिवसे स्वामी विवेकानन्दः पुनर्लण्डनगमनाय निउइयर्कनगरीं तत्याज। स्वामी सारदानन्द-महाराज इतो मध्ये एप्रिलमासस्य प्रथमदिवसे लण्डनं समागत्य इ. टि. ष्टार्डि-महोदयेन सहातिष्ठत्। बहुवत्सरेभ्यः पश्चाद् गुरुभ्रातरं कञ्चन पश्यतः स्वामिमहाराजस्य हृदयं मत्तमयूर इव ननर्त। तत्सकाशात् स्वामिमहाराजो गुरुभ्रातृवृन्दविषये आलमवाजारमठविषये तथाऽन्य-विषयेष्वपि सत्यं विवरणं प्राप। स्वामिमहोदयस्य भारतवर्षविषयिणी कार्यसूची तदा प्रायेण विनिर्मितासीत्। स गुरुभ्रात्रे तत् सर्वं कथयामास।

१८९६ ख्रीष्टाब्दीय-मे-मासस्य प्रथमे भागे स्वामिमहोदयो ज्ञानयोग-विषयकं भाषणं दातुमारेभे। मे मासस्यान्तिमभागात् पिकाडिल्लीस्थ-"रय्यालइन्ष्टिटिउट्-अव्-पेइण्टार्स् इन् ओयाटारकलार्स"-भवने रवि-वासरीय-भाषणं स प्रारभत। तत्र "धर्मस्य प्रयोजनम्", "विश्वजनीन-धर्मः", "पारमार्थिक-व्यावहारिक-मानवः" इति विषयत्रयमधिकृत्य स बभाषे। क्रमेण बहुस्थानेषु विशिष्ट-भवनेषु गोष्ठीषु च भाषणानि ददौ

स्वामिमहाराजः। समयलेशोऽपि यद्यपि नासीत् स्वामिमहोदयस्य, तथापि पत्रलेखने, भविष्यकर्मसूचीनिर्धारणे, प्रत्येकशिष्यहितसाधनार्थोपदेशदाने च स्वामिमहाराजस्य न कदापि क्लान्तिः पर्यलक्ष्यत।

अत्रत्यानां भाषणानां मध्ये नारीणां कृते संस्थापितायां सिसेमक्लाव-संस्थायां दत्तं स्वामिमहोदयस्य भाषणं विशेषेणोल्लेखयोग्यम्। भाषणेऽस्मिन् श्रीविवेकानन्दः प्राचीनभारतवर्षीय-शिक्षापद्धतेः समुत्कर्षं विशेषेण प्रतिपादितवान्, प्रमाणीकृतवांश्च शिक्षाया उद्देश्यं प्रकृतमनुष्यवृत्तेर्न मुखस्थीकरणमात्रम् इति। किञ्च, मानुषान्तर्निहित-पूर्णत्वविकाश-साधनमेव शिक्षा। वर्तमानशिक्षापद्धत्या सह तुलनया सैव गरीयसीति सुसमीचीनतया स्वामिमहोदयः प्रमाणीचकार।

मिस् मार्गारेट् नोबल्महोदया अनेन भाषणेन विशेषेण प्रभावितासीत्। न केवलं शिक्षाविषयकसमस्यानां परन्तु जीवनस्यान्येषां बहूनां जटिल-समस्यानां च मीमांसाशया सा स्वामिमहोदयमाश्रयितुं मनो दधे।

एकदा कस्यांचित् सभायां काचन भद्रमहिला प्राह—"समग्रजीवनमहं धर्ममन्दिरकृत्येषु व्ययितवती। तेषां गतानुगतिकता प्राणहीनता च निष्फलानि रसहीनानीव तानि कृत्यानि चक्रतुः। केवलमन्यैः सार्धं मया गतम्—एकाकिनी न काऽपि जीवनपथे गन्तुं वाञ्छति। स्वामि-महाराज-भाषणश्रवणानन्तरं मम जीवने प्रकृतधर्मदीपो जज्वाल दीपोऽयं शाश्वतः सत्यात्मकश्च; अस्य रसाधायी नवार्थो मदर्थमिव नवीनतया समुपस्थितः। किन्तु स्वामिमहोदयः प्राह यत् सर्वं तेन परिज्ञातं, तत् सर्वमेव गुरुलब्धमिति। अणुपरिमितं वाक्यं तस्य नास्ति यन्न श्रीरामकृष्णाच्छिक्षितम्। (१) पवित्रतम-भारतवर्षस्य पुण्यतीर्थे

१) "I am what I am, and what I am is always due to him, whatever in me or in my words is good and true and eternal came to me from his mouth, his heart, his soul. Shri

स्थित्वा सर्वजटिल-संसारसमस्यानां परलोकस्य मीमांसा च तेनैव कृते"ति।

ईदृशी गुरुभक्तिर्जगति न केवलमादर्शस्थानीया, तत्त्वतो दुर्लभैव।

अस्मिन् वारे स्वामिमहोदयः पूर्वस्माद्वारादपि समधिकतरं परिश्रमं स्वीचकार। अत्र विशेषेण उल्लेखनीयं यत् अजस्रकर्मसमुद्रे निमग्नः सन्नपि स्वामिमहोदयो भक्तियोगविषयक-नारदसूत्रस्य ष्टार्डिमहोदयकृता-नुवादविषये प्रभूत-साहायकं विदधे। ग्रन्थोऽयमस्मिन् समये प्राकाश्यं नीतः; ग्रन्थेऽस्मिन् स्वामिमहोदयस्य टिप्पण्यो विशेषेण मनोरमाः समधिकपाण्डित्यव्यञ्जिकाश्चासन्, ततश्च ग्रन्थोऽयं विशेषेण जनप्रियो बभूव।

इंलण्डावस्थानकाले मे-मासस्याष्टाविंशदिवसे स्वामिमहोदयस्य अक्स्फोर्डविश्वविद्यालयस्य ख्यातनाम्नाऽध्यापकेन म्याक्समुलरमहोदयेन सह साक्षात्कारो नितरां जगद्धितायाभूत्। अस्य प्रख्यात-प्राच्यतत्त्व-विदो ज्ञानस्य विशाल-परिधिं गभीरताञ्च दृष्ट्वा स्वामिमहाराजः परमपरितुष्ट आसीत्। श्रीरामकृष्णप्रसङ्गेन स उक्तवान्— "श्रीरामकृष्णः साम्प्रतं जनानां सहस्रैः पूज्यते" इति। अध्यापकप्रवर-स्तत्क्षणात् प्राह—"यदीदृशो महापुरुषः पूजां न लभेत, कोऽन्यः पूजनीयो भवेत्?" पुनरपि अध्यापकः प्राह "तं जगति प्रचारयितुं भवद्भिः किं क्रियते?" स्वामिमहाराजो म्याक्समुलरस्य भारतवर्षविषये श्रद्धाधिक्यं प्रीतिञ्च वीक्ष्य विशेषेण विस्मयाविष्टो बभूव। अध्यापकवर्याय सविशेष-श्रद्धार्घ्यं विनिवेद्य स्वामिमहाराजः प्राहः—"कदा नु भवान् अस्मद्देशं गमिष्यति? यः खलु परम-श्रद्धयाऽस्मद्देशीय-पूर्वपुरुषाणां चिन्ताधारां पर्यालोचितवान्, तमभ्यर्थयितुं सर्वे बद्धपरिकरा गृहीत-प्रयत्नाश्च भविष्यन्ति इत्यत्र न मे सन्देहः?" विषण्णनयनोऽध्यापक-

---

Ramkrishna is the spring of this phase of the earth's religious life, of its impulses and activities. If I can show the world one glimpse of my Master, I shall not live in vain."

महोदयः प्राह "तथा सति नाहमत्र पुनरागमिष्यामि। ममान्त्येष्टि-सत्कारो भवद्भिरेव तत्र करणीयः स्यात्"। इतः पूर्वं म्याक्समुलार्-महोदयः "नाइन्टिन्थ सेञ्चुरी"-पत्रिकायां "प्रकृतमहात्मे"तिशीर्षके प्रबन्धे श्रीरामकृष्णविषये स्वीयप्रगाढां भक्तिं प्रकटयामास। स्वामि-महाराजेन परिचयानन्तरं श्रीरामकृष्णविषयं ज्ञातं प्राध्यापकवरः प्रयत्न-परो बभूव। स्वामिमहाराजोऽचिरेण श्रीसारदानन्द-साहायकेन भारत-वर्षात् श्रीरामकृष्णविषयकं तथ्यं संग्राह्याध्यापकाय ददौ। फलेन स्वल्पदिवसाभ्यन्तर एव म्याक्स्-मुलार्-महोदयः "श्रीरामकृष्णवाणी तथा च जीवनी"-शीर्षकं ग्रन्थं प्रकाशयामास। अशेष-प्रतिभामण्डिता-ध्यापकलेखनी-प्रसूतोऽयं ग्रन्थ इंलण्डदेशं नितरामालोडयामास। तेन स्वामिमहाराजस्य प्रचारकार्येऽपि महत् साहायकं बभूव।

इंलण्डदेशे स्वामिमहाराजस्य द्वितीयवारागमनं श्रीरामकृष्णधर्म-प्रचारस्य विशेषहिताय बभूव। तदानीमसौ तस्य जीवनस्य परमोद्देश्य-साधकान् कतिचन स्वार्थलेशहीनान् विशिष्टकर्मिणः प्राप। मिस्-मुलार् मिस्-मार्गारेट्-नोबल्-मिः-ष्टार्डि-प्रमुखाः पूर्वपरिचिता जनाः परम-मुग्धास्तस्य शिष्यत्वमधुना स्वीचक्रुः। न केवलं तत्, ते तु स्वामिमहो-दय-जीवनव्रतधर्मप्रचारस्य साफल्य-संसाधनार्थमात्मसमर्पणाय मनो दधिरे। मिष्टार् तथा मिसार्स सेभियार् सत्यान्वेषिणौ देशदेशा-न्तरं परिभ्रम्य स्वामिमहाराजस्य दर्शनानन्तरं तमेव शरणं जग्मतुः। मिसार्स-सेभियार्-महोदयां स्वामिमहाराजो मातृसम्बोधनेन तोषया-मास; साऽपि सर्वदा स्वामिमहोदयं गुरुरूपेण श्रद्धां पुत्ररूपेण स्नेहञ्च भृशं दर्शयामास।

### स्वामिमहाराजस्य यूरोपीय-देशान्तर-भ्रमणम्

दैवकालिक-कठोरपरिश्रमहेतोः स्वामिमहोदयस्य विश्राम आसी-देकान्तप्रयोजनीयः। ततः मिसार्स-मुलार-सेभियार-दम्पतिप्रभृतीना-माग्रहातिशय्येन स्वामिमहाराजो जगाम इउरोपीय-प्रकृति-लीलानिकेतनं

सुइजारल्याण्डदेशम्। तुषारशीर्ष-पर्वतमाला परमसुन्दरग्रामराजिश्च तस्य परमानन्दं जनयामासतुः। सत्यं न्वनुपमं वनवीथीसमाकीर्णमाल्पस्-पर्वतस्य सानुदेशं दृष्ट्वा स तत्र नगाधिराज-हिमालयं मुहुर्मुहुः सस्मार। तेन च, कल्पनयोपस्थापिता हिमाचलस्य मनोरम-परिवेश-समाश्रिताश्रम-वसतिस्तस्य मनो भृशं चकर्ष। अहो! तादृशे स्थाने ध्यानतपस्यापूर्वकं जीवनयापनं परमलोभनीयं खलु। तत्र नु स्थास्यन्ति तेन सह भारतीया अभारतीयाश्च सर्वे धर्मसन्ताना ये तस्य धर्मदर्शने पृथिव्यां प्रचारयितुं, सेवया च जगतो हितं साधयितुं, सततं यतिष्यन्ते। स्वामिमहोदयः स्वयं तान् शिक्षयिष्यति, ते च श्रेष्ठकर्मिरूपेण जगति गणयिष्यन्ते। तेषां केचन पाश्चात्त्यदेशे वेदान्तप्रचारं, केचन च भारतवर्षस्य महोपकारं साधयिष्यन्ति। स्वामिमहोदयस्यैषा परिकल्पना पश्चात् चरमसार्थकता-मलभत। अस्याः परिकल्पनायाः प्रथमरूपग्रहणं बभूव आल्मोडायां स्थापिते मायावत्याश्रमे।

इतो मध्ये जार्मानस्थ-कियेल्-विश्वविद्यालयस्य प्रख्याताध्यापक-पल्-डय्सेन्-महोदयः स्वामिमहोदयमामन्त्र्य पत्रमेकमिंलण्डदेशे प्रेषयामास। तत् सुईजार्ल्याण्डावस्थानकाले स्वामिमहोदयः प्राप्तवान्। सशिष्यः स्वामिमहाराजस्ततः कियेलनगरमगच्छत्। स्वामिमहाराजस्यागमन-वार्तां प्राप्यैव प्रातर्भोजनाय डय्सेन्दम्पती तं सेभियार्दम्पति-सनाथं निमन्त्रयामासतुः। प्रातर्दशघटिकावादनत उपस्थिते सेभियार्दम्पतिभ्यां सह स्वामिमहोदये डय्सेन्-दम्पती तेभ्यो विशेषाभिनन्दनं ददतुः।

प्रसङ्गक्रमेणाध्यापकमहोदयः प्राह — "वेदवेदान्तयोर्मोहनशक्तिः स्वल्पकालाभ्यन्तरे मानवं बाह्यजगद् विस्मारयति। तत्पाठेन मनः समुन्नताध्यात्मिकं-भावराज्याय प्रतिष्ठते। मानवमस्तिष्केण सत्यानु-सन्धानतत्परेण ये विषया आविष्कृतास्तेषां निबन्धनं यथा उपनिषद्-वेदान्तदर्शन-शाङ्करभाष्येषु दृश्यते, तद्वन्नान्यत्र कुत्रापि। सत्यज्ञानस्य श्रेष्ठस्फूर्तिरत्र संदृश्यते।" भूयोऽपि अध्यापकप्रवरः प्राह—"मन्ये उच्चा-

ध्यात्मिकानुभूतिं प्रति मानवानां यात्रा समारब्धा ; तस्यां यात्रायां भारतवर्षम् आगामिनि काले धर्मगुरोरासनं परिगृह्य उन्नतमाध्यात्मिक-चिन्तासमूहं पृथिव्यां संप्रसारयिष्यति ।" (१)

पाठगृहे स्वामिमहोदयं परित्यज्य स्वल्पकालाय गृहान्तरमगच्छत् पल्डय्सेन्-महोदयः । ततः पुनरागत्यासौ तं गभीर-मनःसंयोगपूर्वकं विशाल-कविताग्रन्थपाठरतमपश्यत् । अध्यापकप्रवरो यतमानोऽपि स्वामिमहोदयस्य पुस्तकपाठमनःसंयोगं शिथिलयितुं न समर्थ आसीत् । स्वल्पकालानन्तरं स्वामिमहोदयः पल्डय्सेन्-महोदयं तेन सह भाषणायापेक्षमाणं दृष्ट्वा सलज्जं प्राह—"भवान् कदा प्रत्यावृत्तवान् ? क्षमार्होऽस्मि, भवदागमनं नासीन्मम परिज्ञातम् । यतो ध्याननिविष्टमना अहमेतत्पुस्तक-पाठरत आसम्" ।

अध्यापकमहोदयः ससंशयं प्राह—"कतिपय-निमेषाभ्यन्तरे किं भवता पठितम् ? केवलं पत्रसमूहो भवता पार्श्वात् पार्श्वान्तरे संस्थापितः" । ततः स्वामिमहाराजो भाषणावसरे न केवलं पद्यानि तस्माद् ग्रन्थात् समुद्धृतवान् , तेषामपूर्वं व्याख्यानं च कृतवान् । चरम-विस्मयाविष्टः पल्डय्सेन्महोदयस्ततः प्राह—कथमेतादृशी धीशक्तिर्मानवैरुपार्जयितुं शक्या इति । स्वामिमहोदयः सस्मितं प्राह—"योगिनो नैतदसम्भवं लेशतोऽपि । एतादृशीं शक्तिं सर्वेऽपि अर्जयितुं शक्नुवन्ति । भवान् जानाति किल यत् कामिनीकाञ्चनत्यागी संन्यास्यहम् । आजीवनाखण्ड-ब्रह्मचर्यपालनफलेनेयं शक्तिः स्वभावतो मां वृतवती" । परमलज्जितोऽध्यापकप्रवर-पल्डय्सेन्-महोदयः स्वामिमहोदयं क्षमामयाचत ।

कीयेल्नगरेऽवस्थानसमये पल्डय्सेन्-महोदयेन सहोपनिषदादि-

१) "It seems that a movement is being made back towards the fountain-head of spirituality, a movement that will, in the future, probably make India, the spiritual leader of the nations, the highest and greatest spiritual influence on earth."

विषयकालोचनावसरे स्वामिमहोदयो भूयिष्ठज्ञान-गरिष्ठतां तथा प्रकाशीकृतवान्—यत्फलेन अध्यापकप्रवर-पलूडयसेन्-महोदयः स्वामिमहोदयेन सार्धं लण्डन-नगरं समागतवान्। अध्यापकप्रवरः स्वबन्धुगृहेऽवातिष्ठत; स्वामिमहोदयश्च ह्यास्पष्टेडाञ्चले सेभियार्-दम्पतिभ्यां सह। लण्डन-नगरमध्यापकवरः सप्ताहद्वयमध्युवास। तदवसरेऽसौ प्रायेण स्वामिमहोदयं साक्षात्कृत्य वेदान्तस्य सूक्ष्मातिसूक्ष्म-भावावलीं बोद्धुं प्रयतते स्म। तस्य महती प्रतीतिरासीद्यद् यदि कोऽपि भारतीय-चिन्ताधारा-गभीरगहनतले प्रवेष्टुमिच्छेत्, निश्चितमेव तेन संस्कारमुक्तमनसा भवितव्यम्।

अत्रेदमुल्लेखमर्हति यत् सर्वविषयेषु यथायथमुपदिश्य स्वामिमहाराजो गुरुभ्रातरं श्रीसारदानन्दमहोदयं जे. जे. गुड्इन्-महोदयेन सहामेरिकां प्रेषितवान्। स्वामिसारदानन्दश्च स्वल्पदिवसैरेव वाग्मिता-पाण्डित्य-प्रभावेणामेरिकावासिनां विशेषेण वेदान्तानुरागिणां हृदयमधिचकार। गुरुभ्रातुरेतादृश-साफल्येन स्वामिविवेकानन्दस्य मनस्यजायत परमा शान्तिर्निरुद्वेगं सुखं च। आमेरिकायां प्रचारविषये स परमनिश्चिन्तो बभूव।

व्यतीतेषु दिवसेष्विंलण्डवासिनः स्वामिमहोदयस्य वक्तृतादि-प्रभावेण तत्र सविशेषाग्रहान्विता आसन्। कालेऽस्मिन् अद्वैतवादश्रेष्ठसिद्धान्तान् विश्लिष्य स्वामिमहाराजो बभाषे। तान्येव भाषणानि पश्चात् 'ज्ञान-योग'-नाम्ना प्रकाशितान्यासन्। तेन सत्यान्वेषिणः शतशो मुक्तिपथ-सन्धानं लेभिरे। नूनं वेदान्तदर्शने निहित आस्ते मानवमनोमुक्ति-मन्त्रः। स्वामिमहाराजस्तस्यासाधारण-शक्त्या वेदान्तस्य दुर्बोध-कठिन-तमांशान् सरलसुललित-कवित्वमय-भाषया संप्रकाश्य सर्वजनबोध्यांश्चकार। तस्य समुद्र-गम्भीर-व्यक्तित्वस्पर्शेन प्रत्येकं वाक्यं श्रोतृ-वृन्दहृदये तीव्र-कम्पनं ससर्ज। एतेन वक्तृतानां प्रभावेण न केवलं स्वामिमहोदयस्य शिष्याः परन्त्वन्येऽपि बहवो मनीषिणश्चिन्तानायका

भारतीय-दर्शनचिन्ताधाराविषयेऽशेषश्रद्धालवोऽजायन्त।

स्वामिमहोदयस्य गुरुभ्राताऽभेदानन्दोऽपि तदा स्वामिमहोदयस्याह्वानेन इंलण्डदेशे समुपस्थित आसीत्। स्वामिमहोदयः परमानन्दितः सन् सर्वेषु विषयेषु तं स्वमतानि विज्ञापयामास। अक्टोबर-मासस्य सप्तविंशदिवसे तस्य गुरुभ्रातुरभेदानन्दस्य सर्वप्रथमां वक्तृतां श्रुत्वाऽसौ परमसंफुल्लो मनसीत्थं चिन्तयामास—"यद्यहं ध्वस्तोऽप्यत्र भवेयं ममवाणी न स्तब्धा भविष्यति। सेयं मम प्रियभ्रातुः कण्ठे ध्वनिष्यति —विश्ववासिनश्चाशेष-श्रद्धया तां वाणीं श्रोष्यन्ती"ति।

इतः प्रागपि स्वामिमहाराजो वेदान्त-सम्प्रदाय-त्रय-विषयक-निबन्ध-रचनायै वेदग्रन्थेभ्योऽशविशेषान् संकलयितुं प्रारेभे। किन्तु सर्वक्षणमसौ जनसंदर्शन-पाठचक्रोपदेशदान—निरन्तर-लेखन—पत्रोत्तर-दान–भाषणादि-व्यापारेषु व्यापृतः सन् स्वसंकल्पित-वेदान्त-प्रपञ्चनग्रन्थ-विरचने न समर्थो बभूव। किन्तु तदानीं तस्य परमाह्लादकारणमासीद्यत् परमोत्साहभरेण इंलण्डवासिनस्तथाऽन्ये च पाश्चात्त्यदेशीयास्तस्य सद्यः प्रकाशितं ज्ञानयोगमाद्रियन्ते स्म। स्वल्पकालेन ग्रन्थस्यास्य प्रथम-संस्करणं विक्रीतमासीत्; संस्करणस्य द्वितीयस्य प्रकाशनात् प्रागेव बहुशतसंख्यक-ग्रन्थेभ्योऽनुरोध आसील्लब्धः। किन्तु पूर्ण-वेदान्त-ग्रन्थ-लेखनाभिलाषो न तं कदापि तत्याज, यतः १९०१ खीष्टाब्दीय-जानुयारी-मास्यपि मायावत्यामवस्थानकाले स शिष्यानवदत्—"सर्वाणि कृत्यानि विहायाहं वेदान्तग्रन्थ-लेखनाय जीवनस्यावशिष्टांशं यापयिष्यामि। तदर्थञ्च मायावतीतो विशिष्टतरं स्थानं निश्चितं नास्त्येव"।

निउइयर्कनगरीतोऽपि स्वामिमहोदयः सुसंवादं लेभे यत् श्रीसारदानन्दोऽसाधारण-साफल्येन आमेरिकायां वेदान्त-प्रचारकार्यं परि-चालयति स्म। आमेरिकायाम् इंलण्डे च वेदान्त-प्रचारस्य सुव्यवस्थां वीक्ष्य स्वामिमहाराजः स्वदेश-प्रत्यावर्तनाय समुत्सुको बभूव। १८९६ खीष्टाब्दीय-नभेम्बरमासि स्वामिमहाराज एकदा सेभियार्-महोदयाय

भारत-गमनाय निर्देशं ददौ। सेभियार्-दम्पती भारतवर्षे समागत्य जीवनस्यावशिष्टांशमीश्वर-चिन्तया यापयितुम् ऐच्छताम्। साम्प्रतं स्वामिमहोदयस्य सम्मतिं लब्ध्वा तौ भारतगमनाय प्रोत्कण्ठितौ बभूवतुः। तौ तयोः सर्व-लौकिकसम्पदो विक्रीयार्जितं समग्रमर्थं स्वामिमहोदयाय ददतुः। गुड्उइन्-महोदयोऽपि स्वामिमहाराजस्य पाश्चात्त्य-देशपरिभ्रमणकाले छायावत् तेन सह सर्वत्र जगामेति हेतोः सोऽपि भारतगमनायानुमतो बभूव।

स्वामिमहोदयस्य भारत-प्रत्यावर्तनेच्छां ज्ञात्वा मिसार्स ओलिवुल्-महोदया लिलेख यत्—सा स्वामिमहाराजस्य भारतवर्षे कर्मसाहायक-विधानार्थमर्थदानाय समुत्सुका। विशेषतो रामकृष्णसंन्यासिसङ्घार्थं स्थापयितव्ये मठे तस्या महती रुचिरर्थदानाभिलाषश्च महान् इति। मिसार्स ओलिवुल्-महोदयायाः पत्रेण परमतुष्टोऽपि स्वामिमहोदयस्तां विज्ञापयामास—नाधुना विद्यतेऽर्थस्य प्रयोजनम्। काले प्रयोजने सञ्जाते श्रीमत्या अर्थोऽवश्यमेव संग्रहीष्यत इति।

इंलण्ड-त्यागात् प्राक् स्वामिमहोदयस्य प्रियशिष्या अनुरागिणश्च मिः ष्टार्डि-महोदयस्याध्यक्ष्येण पिकाडिल्यश्चले स्वामिमहोदयस्य विदाय-संवर्धनासभामाह्वयामासुः। विशाल-जनसङ्घो विषादगम्भीर आचार्य-देवं विदायाभिनन्दनं ज्ञापयामास।

बहवस्तु भावातिशय्यात् किमपि वक्तुं न शेकुः। सर्वेषां नयना-न्यश्रुपूरितान्यासन्। एतेन दृश्येनाऽऽचार्यदेवस्य हृदयमपि बभूव विचलितम्। विदाय-सम्भाषणानन्तरं ह्यामण्ड-महोदयमुद्दिश्य स्वामि-महाराजो बभाषे—

> श्रेयः प्रकृष्टमिदमित्यवधारितेऽहं
> शक्नोमि जीर्ण-पटवत् स्ववपुर्विहातुम्।
> दौर्गत्य-भारगुरु भारतमुन्निनीषोः
> कल्पोऽयमल्प इव मे प्रतिभाति सत्यम्॥ १२२

एवं स्थितेऽपि न हि यावदिमे मनुष्याः
सत्यं परं समधिगन्तुमलं भवेयुः ।
धर्मोपदेशन-विधेर्जनमङ्गलार्थात्
तावन्न मे विरतिरस्ति मुहूर्तमाम् (१) ॥ १२३

श्रीविवेकानन्दस्य प्रभावविषये श्रीविपिनचन्द्र-पाल-महोदयेन १८९८ खीष्टाब्दीय-पञ्चमदिवस-लिखिते पत्रे किञ्चित् प्रमाणां लभ्यते। (२) पत्रमेतत् "इण्डियान्-मिरार्"-पत्रे प्रकाशितं बभूव। सत्यप्युभयोर्धर्मविषयकमतभेदे तत्र स्पष्टतो लिखितं विपिनचन्द्र-पाल-महोदयेन— "विवेकानन्दस्य धर्ममत-प्रचारफलेन इंलण्डदेशवासिनां नयनानि प्रोन्मीलितानि, हृदयानि च विस्फारितानि बभूवुः। इदानीमनेक एव तत्रत्या विश्वसन्ति किल यत्—प्राचीन-भारतीय-शास्त्रेषु विस्मयावहान्याध्यात्मिक-तत्त्वानि राजन्ते सुगूहितानीति" इति।

इंलण्डदेशेऽवस्थानकाले स्वामिमहाराजस्य ईदृशो विश्वासः समजनि यद् वेदान्तस्य मूलतत्त्वमिंलण्डीय-धर्मयाजका अपि तथा ग्रहीष्यन्ति यत्फलेन तेषामनेके धर्मस्य सर्वजनीनत्वमवश्यमेव स्वीकरिष्यन्ति । कलिकातानगर्यां स्वागत-सम्भाषण-प्रत्युत्तर-दानकालेऽपि स्वामिमहोदयः प्राह यत्— धर्मदर्शन-प्रचारविधौ आमेरिकादेशतोऽपि इंलण्डदेशविषये तस्य विश्वासो महत्तर आसीदिति। इंलण्डतः प्रत्यावर्तनात् प्राक् स्वामिमहाराज आमेरिका-निवासिनीः समुद्दिश्य पत्र एकस्मिन्

१) "I may even find it good to get out of this body, to throw it off like a disused garment. But I shall never cease preaching and helping mankind until all shall come to know the Highest Truth."

२) "I must say that Vivekananda has opened the eyes of a great many here and broadened their hearts. Due to his teaching, most people now believe here firmly that wonderful spiritual truths lie hidden in the ancient Hindu scriptures."

लिलेख—"इंलण्डदेशवासिविषये मम मतस्य परिवर्तनं सुमहत् जातम् ।

इदानीं बुध्येऽहं समदृगपि किं तेषु भगवान्
दयाधारामुच्चै रितरदुरवापां वितनुते ।
भवन्त्येते धीरोन्नत-मतय आमेरु-सरला
न धर्मादौ केषामपि च विदधते लाघवधियम् ॥ १२४

केवलं मुखोपरि वर्तते गोपनावरणमेकम्, त्रुटिते तस्मिन् लभ्यते परमात्मीयो जनः" इति (१) ।

यथा तथा वा भवतु, प्राच्य-पाश्चात्त्य-मेलन-व्यापारे श्रीरामकृष्ण-गोष्ठी यादृशं प्रभावं विस्तारितवती न तादृशः प्रभावस्तया कदाप्यासीद् विकीर्णपूर्वः । एतयैवाभूतपूर्वः प्राच्य-पाश्चात्त्य-सम्मेलनोद्योगो विहित इति ध्रुवम् ।

इंलयडदेशे प्रचारभारं स्वामिनेऽभेदानन्दाय समर्प्य स्वामिमहाराजो डिसेम्बरमासस्य षोडशदिवसे सेभियार्-दम्पतिभ्यां सह लण्डनं तत्याज । स्थिरीकृतवांश्च यद् गुड्उइन्-महोदयो नेपल्स्-नगरे तेषां सहगामी भविष्यतीति ।

भारत-यात्रायाः प्राक् कश्चन इंलण्ड-देशीयो बन्धुः कौतूहलात् स्वामिमहोदयं पप्रच्छ—"महाराज ! विलासैश्वर्यमय-महाशक्ति-गौरव-भूषित-पाश्चात्त्यभूमौ सुदीर्घ-वर्षचतुष्टयं यापयतो भवतो भारतवर्षं कीदृग्रुचिकरं स्यात् ?" आचार्य-देवस्तस्य स्वभावसुलभ-दृढ-सरलभङ्ग्या प्राह—"भारतत्यागात् प्राग् ममासीद् भारतबर्षं प्रति भक्तिः प्रीतिश्च ।

---

१) "My ideas about the English have been revolutionised. I now understood why the Lord has blessed them above all other races. They are steady, sincere to the backbone, with great depths of feeling only with a crust of stoicism on the surface; if that is broken, you have your man".

इंलगडत्यागात् प्राक् पुनर्जाता भारतवर्षस्य धूलिकणास्वपि पवित्रता-बुद्धिः। भारतस्य समीरणो मम प्रतिभाति पावित्र्य-परिपूर्णः। भारतवर्षं मम तीर्थभूमिः साम्प्रतम्" इति। (१)

भारत-प्रत्यावर्तनपथे स्वामिमहोदयः

स-सेभियार्-दम्पतिकः श्रीविवेकानन्दो मिलानाभिमुखं प्रतस्थे। स्वामिमहाराजस्यानन्दस्यावधिर्नासीत्। वाष्पीयशकट-परिभ्रमणं तस्यारुचिकरमपि तदानीं तस्य कष्टकारणं नाजायत। देशस्य हित-साधन-परिकल्पनादीनि तं नितरां समुल्लासयन्ति बहिष्ठ-जनानामपि परमप्रीतिं जनयामासुः। बालसुलभ-सारल्यं सततं भजमानोऽपि मनीषिश्रेष्ठोऽसौ सर्वाणि द्रष्टव्यानीक्षामास।

मिलानतः स्वामिमहाराजः फ्लोरेन्स्-नगरमगमत्। तत्रास्य परम-प्रीतिकरी घटना समघटत। आमेरिकास्थ-हेइल्दम्पती तत्र परिभ्रमणार्थमायातौ स्वामिमहोदयेन परिदृष्टौ बभूवतुः। एतत् खलु निश्चितं विधेरपूर्वं विधानम्! अनेन वृत्तेनैतेषां त्रयाणामानन्दस्य परा काष्ठाऽसीत्। तदवसरे स्वामिमहोदयस्तौ स्वीयां भारतवर्षीय-कर्म-पद्धतिं विज्ञापयामास।

ततो रोमनगरे तैरासीत् सप्ताहकालो व्ययितः। तत्र स्वामि-महाराजः तस्यैतिहासिकनगरस्य द्रष्टव्यवस्तूनि निपुणभावेनैक्षत। रोमनगरे एकदा खीष्टीय-धर्मानुष्ठानं प्रति स्वामिमहोदयस्य मनोयोगं समाकृष्य काचन नारी प्राह—"स्वामिमहोदय! अप्येतत् सर्वं धूप-दीपाहरणात्मकानुष्ठानं भवते रोचते?" स्वामिमहाराजः प्राह—"यदि भागवत-व्यक्तिसत्तायामास्ते ते विश्वासः, तदा तस्मै देयानि सर्वश्रेष्ठानि —धूप-पुष्प-फल-प्रभृतीन्येव। वस्तुतो भगवते देयं प्रकृष्टं वस्तु जगति

१) "India I loved before I came away. Now, the very dust of India has become holy to me, the very air is now to me holy; it is now the holy land, the place of pilgrimage, the Tirtha."

किं वा स्यात् ?" अत्रावस्थानकाले स्वामिमहाराजो विषुभियास-पम्पियाइ-प्रभृतिस्थानानि चापश्यत् ।

"साउथाम्पटन"-नगरीतो यद् बाष्पीय-जलयानं प्रतस्थे, तस्मिन् गुडउइन्-महोदयोऽपि यात्रिरूपेण समागच्छत् । प्राच्यदेशाभिमुखं चलतः स्वामिमहाराजस्य उच्छ्वसितानन्दधारा सर्वेषामासीत् प्रीतिकरी ।

"न्यापलस्-पोर्टसैयद"-नगरयोर्मध्यभागे कस्मिंश्चित् स्थाने स्वामि-महोदय एकमभिनवं स्वप्नं ददर्श । तत्र कश्चन श्मश्रुभूषितो वृद्धस्तं वदति स्म—मद्दर्शितं स्थानं त्वं निश्चलचक्षुषा पश्य । साम्प्रतं क्रीटद्वीपे वर्तसे । अस्मिन् स्थाने जन्म ख्रीष्टधर्मस्य ।" पुनरपि वृद्धोऽसौ बभाषे—"अस्मिन् स्थाने न्युषितपूर्वाणां थेरापुत्राणामन्यतमोऽस्मि (१) ।" "एस्सिनि" (२) इत्यानुपूर्वीकः कश्चन शब्दस्तस्य वदनान्निर्गलितो न स्पष्टतया स्वामिमहोदयेन श्रुतः । पुनरपि स वृद्ध उवाच उपसंहार-मुखेण—"अस्माकं सत्यानि यीशुना प्रचारितानि तथा चास्माक-मादर्शस्तेन प्रचारित इति नूनं ख्रीष्टधर्मावलम्बिभिर्वितथमुच्यते । वस्तुतो यीशुनामकः कश्चन जीवो धरातले न कदापि जज्ञे । अस्मत्-स्थान-खननात्—तद्विषयकाणि बहुप्रमाणानि अतः परं विज्ञातानि भविष्यन्ति" । स्वप्नावशेषे स्वामिमहोदयो बहिरागत्य नाविकं कञ्चन पृष्टवान् किन्नामकं स्थानं तदिति । स चाह—क्रीट् इति । एतेन स्वामिमहोदयो विस्मयान्वितो बभूव । ततस्तस्य मनसि समजायतेदृशी काचन भावना—अपि सत्यं यीशुख्रीष्टनाम्ना कोऽपि नासीदिति । अथवेत्थमपि भवितुमर्हति यत् ख्रीष्टधर्मप्रचारकाणां करणीयान्यासन् परिज्ञातानि । तद्ग्रन्थ-सन्निवेशकारकाणां—थेरापुत्राणां मतवादेन जातं संमिश्रणं नाजारीनसम्प्रदायस्य—यत्फलेन ख्रीष्टधर्मो दर्शन-वादं ख्रीष्टनामकव्यक्तिविशेषं च लेभे । किन्तु नेयमुच्छिन्नमूला

---

१) "I am one of the Therapaeutae who used to live here." २) Essene.

चिन्ता प्रमाणरूपेणोपस्थापयितुं शक्या ख्रीष्टधर्मस्योत्पत्तिविषये इतिहास-प्रपञ्चने वा। तथापि स्वामिमहाराजस्य सन्देहः कश्चन नासीत् यद् "आलेकजेन्द्रिया"-नामके स्थाने सभा काचनासीदनुष्ठितपूर्वा यस्यां भारतीयानां मिसरदेशीयानाञ्च बभूव महन्मेलनं, तदेव चाकरोत् ख्रीष्ट-धर्मस्य रूपपरिग्रहे प्रकृष्टसाहायकम् (१)।

यद्यपीत्थं स्वामिमहोदयस्य हृदयेऽजायत भावना, तथापि यीशुख्रीष्टं प्रति स्वामिमहाराजस्य भक्तेः स्खलनं नासीत् कथञ्चन। काञ्चन नारीं संबोध्य स्वामिमहाराजः प्राह—"महाशये! प्यालेष्टाइन्धाम्नि यद्यहं नाजेरथस्थ-यीशुख्रीष्टसमयेऽभविष्यम्, अहं तस्य पादयुगलं न ममाश्रु-धारया, परन्तु हृदयरक्तेनाभिषिक्तमकरिष्यम् (२)।

बाष्पीय-जलयानेन भारतवर्ष-प्रत्यावर्तनसमये पुनः समघटद्रम्या विशेषघटना, या पुनः स्वामिमहोदयस्य भारतवर्षं प्रति निगूढभक्ति-पूत-प्रेम्णोऽन्यदुदाहारणं ननु। केचन ख्रीष्टधर्मयाजकाः स्वतः पर्यालोचन-प्रवृत्ता यदा सर्वतोभावैः पराजिता बभूवुस्तदा ते हिन्दुधर्मस्य कुत्सा-भाषणं कर्तुमारेभिरे। कियत्कालं स्वामिमहोदय एतत् सर्वं सेहे;

१) इतिहासज्ञाः पाठका जानन्ति किल यदाधुनिकैतिहासिकैः प्रमाणीकृतं क्रीट्द्वीपस्थ-प्राचीनसभ्यता आसीरीय—वाविलोनीय-सभ्यतायाः समकालीनैवेति ( Vide Harmworth's History of the World, vol. III ).

२) "Madam ! had I lived in Palestine at the time of the Jesus Nazareth, I would have washed his feet, not with my tears but with my heart's blood."

ईदृशावस्थायां स्वामिमहाराजस्तस्यैंलण्डनिवासिने कस्मैचन प्रत्नतत्त्वविदे बन्धवे एतद्विषयकं पत्रमेकं ददौ। सत्यासत्य-निर्धारणाय तमनुरुरोध च। स्वामि-महोदयस्य महातिरोधानादनन्तरं "ष्टेट्सम्यान्"-पत्रिकायां कश्चन प्रबन्धो-ऽदृश्यत, यस्मिन् स्पष्टतयोल्लिखितमासीत् केचन ब्रिटिश-प्रत्नतत्त्वविदः खननावसरे बहूनि खीष्टधर्मोद्भव-विषयकाण्यज्ञातपूर्व-तत्त्वान्यलभन्त इति।

तदनन्तरं स कस्यचन धर्मयाजकस्य गलदेशवस्त्रं धृत्वा प्राह—"यदि इतः परमपि त्वं मम धर्ममधिक्षिपेः, अहं त्वामचिराज्जले पातयिष्यामि"। परमभीतो धर्मयाजकोऽसौ प्रकम्पमानोऽधीरं भाषते स्म—"क्षमस्व, भद्र ! मां क्षमस्व। अतः परं नाहमस्मिन् व्यापारे प्रवर्तिष्ये"। एतद्विषय-मधिकृत्य स्वामिमहाराजः कदाचन सिंहनामकं कञ्चन प्राह—यदा ख्रीष्ट-धर्मयाजका भारतीय-धर्मं निन्दन्ति, कथं तद् भारतीयाः सहन्ते ? अथवा हिन्दुं यदा ते धर्मान्तरितं कुर्वन्ति, तदा वा कथं तद् हिन्दुभिः सह्यते ?

भारतीयान् प्रति स्वामिमहोदयस्य कीदृशं प्रगाढं प्रेमासीत्तस्य प्रमाणमपि लभ्यतेऽस्मिन् प्रत्यावर्तनावसर एव। एडेन्-नगरे कञ्चन भारतीयं 'हुक्का'-योगेन धूम्रपानरतं दृष्ट्वा स्वामिमहाराजोऽचिरात् सर्वान् सङ्गिनः परित्यज्य तत्सकाशं गत्वा धूम्रपानमयाचत। ईदृश-सरल-सुभगकण्ठेन स्वामिमहाराजोऽभाषत यत् स तद्दाने द्विधालेशमपि मनसि नाकरोत्। धूमपस्य भारतीयत्वमेव स्वामिमहाराजं धूमपान-याच्ञायां प्रोद्बुद्धमकरोत्।

१८९७ ख्रीष्टाब्दस्य प्रथममासीय-पञ्चदशदिवसस्य प्रत्यूषे सिंहल-द्वीपस्य तटभूमिर्दूरादवालोक्यत। अरुणरागरञ्जित-समुद्र-सैकतस्य रूपराशेरवधिर्नासीत्। तदापि स्वामिमहोदयस्य ज्ञातं नासीद् यत् कीदृशमभिनन्दनं तदर्थम् अपेक्षते स्म। तस्य प्रत्युद्गमनार्थं तस्य गुरु-भ्राता निरञ्जनानन्दस्तत्र कलम्बो-नगरे उपस्थित आसीत्। अन्ये केचन गुरुभ्रातरस्तस्य प्रत्युद्गमनार्थं माद्राज-नगरीमध्यतिष्ठन्।

—o—

॥ द्वितीय-खण्डं समाप्तम् ॥

# तृतीय-खण्डम्

स्वामि-महाराजस्य कलम्बो-नगरे शुभपदार्पणम्।

दूरदृष्टं सिंहलमुद्दिश्य स्वामिमहाराजोमनसैवाह

नारीकेल-तमाल-ताल-लसितैः कुञ्जैर्मनोहारिणी
कल्लोलैरमितैर्निरन्तर-समायातैः पदे सेविता।
अम्भश्चारि-विहङ्गसङ्ग-रुचिरा विस्तीर्ण-वेलावनी
रम्या सिंहल-संज्ञया परिचिता द्वीपस्थली वर्तते ॥ १२५

प्रथमं सिंहलस्तदनन्तरं भारतवर्ष—स्वल्प एव विलम्बः किल भारत-मातुः पूत-धूलिस्पर्शनस्य। स्वामिमहाराजस्य हृदये ततो विराजते स्म असेविताद्दृष्टपूर्वो ब्रह्मानन्दसहोदरः श्रीमातृपद-दर्शनानन्द-हिल्लोलः। देशमाता, गुरुमाता, गर्भधारिणी मातेति—त्रयं द्रक्ष्यते तेनाचिरेणैव।

कलम्बोनगरीय-वाष्पीय-जलयान-विरामस्थाने समागते जलयाने परिदृष्टे च स्वामिमहोदयस्य गैरिकोष्णीषे विशालजनता समुद्र-सैकते समागता आनन्दोल्लसित-ध्वनिभिः स्वामिमहाराजमभिननन्द। अहो!

उच्चैरेष सहस्र-कण्ठज-रवो दिक्चक्रवालं स्पृशन्
पातालं प्रविवेश सोर्मि-सलिलं भिन्दन् द्रुतं वारिधेः।
प्रागादूर्ध्वमपि प्रभिद्य विततं नीलं नभोमण्डलं
वक्तुं शिष्यसमुन्नतिं भगवते श्रीरामकृष्णाय सः ॥ १२६

सस्मितवदनो जलयानाद् बहिराजगाम भारतविवेकोऽद्य विश्व-विवेकरूपेण परिणतः सर्वजगदभिनन्दनकारणम्। कलम्बोहिन्दुसमाज-मुखपात्ररूपेण माननीय-पि. कुमार-स्वामिमहोदयः श्रद्धाविगलितकण्ठेन स्वामिमहोदयमुद्दिश्याभिनन्दन-पत्रं पपाठ, तत् तस्य परम-मङ्गलकरे ददौ च। जनताया जयनिनादा नन्दनवनवायव इव स्निग्धतासुवास-प्रभृतिभिः समग्रं सिंहलभूखण्डं पवित्रीकृत्य वेदान्तमूर्ति-स्वामिमहोदयस्य

पुरतः पार्श्वतः पृष्ठतश्च परिबभ्रमुः। समुद्रं च समधिकतरमुत्तरलीचक्रुः। अहो भगवद्भक्तिपुण्यप्रकाशः! यो दण्ड-कमण्डलु-धारी कपर्दकहीनः सन्न्यासी स्वामिमहाराजः कतिपयवर्षेभ्यः प्रागासमुद्र-हिमाचलं भारतभूमिं परिबभ्राम भूयसा पादव्रजेन, तस्मै संवर्धनां ज्ञापयितुमासमुद्रहिमाचलं भारतवर्षमद्य कोटिकोटि-रोमाञ्चोद्गमैरुन्मुखं राजते।

युगलाश्ववाहितं शकटमारूढं स्वामिमहोदयं पुरतः कृत्वा पत्रपुष्पपताका-तोरण-शोभितेन राजपथेन प्रचचाल विशाला शोभायात्रा। गन्तव्य-स्थलमासीत्तदानीं "दारुगन्धोद्यान"सम्मुखस्थमण्डपम्। शकटादवतरति स्वामिमहोदये परःसहस्रा नरहस्ताः सुलक्ष्या दुर्लक्ष्या वा संप्रसारिता आसन् तस्य पवित्र-पादरजोग्रहणाय। अजस्र-पुष्पमाल्यरत्नैकादिदानेन तोषयामासुस्तं भारतवासिनः सिंहलवासिनो भिन्नदेशवासिनश्च तत्र तस्य संवर्धनाय सम्मिलिताः—तदानीं विश्वमिव तत्र मण्डपे पिण्डीभूतम्।

परस्मिन् दिवसे विख्याते "फ्लोरेलहल" समाख्य-सभगृहे स्वामिमहोदयेन "पुण्यभूमि-भारतवर्ष"-विषयकं भाषणं दत्तम्। पाश्चात्त्यदेशात् प्रत्यागतस्य विवेकानन्दस्येदं प्रथमं भाषणम्। (१)

---

१) भाषणमेतत् स्वामिमहोदयस्य भारतप्रेम, भारतवर्षं प्रत्यान्तरिककृतज्ञतां च बाहुल्येन प्रकटीकरोति। अत्र स्वामिमहोदय उक्तवान्—"विलायत-गमनेन ममैवोपकारः समधिकतमो जातः। यन्ममेतः पूर्वं हृदयावेगहेतोर्विश्वासमात्रसम्बलमासीत्, साम्प्रतं तज्जातं प्रमाणसिद्धम्। पूर्वमन्येषां हिन्दूनां यथा, तथा ममापि विश्वास आसीत्—भारतं पुण्यभूमिरिति, अद्य सर्वसमक्षं दण्डायमानोऽहं ब्रवीमि—एतत् सत्यं, सत्यं, सत्यमिति।" एतद्विषये बहूनि विश्वासार्हाणि प्रमाण-वाक्यानि स्वामिमहोदयेन तदानीमुक्तानि। स्वामिमहोदयः परमावेगभरेणावदत् किल यत्—"बन्धवः! भवन्तो विश्वसन्तु भारतवर्षमेव जगत् सर्वमाध्यात्मिक-तरङ्ग-विप्लावितं करिष्यतीति।

कलम्बो-नगरतः स्वामिमहोदयोऽगच्छत् काण्डिनगरम्। तस्मान्नानुराधापुरपथेन जाफना (२), जाफनातः "ष्टीमार"योगेन जानुयारीमासस्य षड्विंश-दिवसे पाम्बानम्। पाम्बानाख्यं द्वीपं भारतवर्षस्यैकान्तसन्निकटवर्ति। स्वामिमहोदयस्य राजशिष्यो रामनादराजो भास्करवर्मसेतुपतिस्तत्रोपागच्छद् गुरुदेवमभ्यर्थयितुम्। नृपतेर्मुकुटमण्डितं शिरो विलुण्ठितमभवद् भिक्षुकसन्न्यासिश्रीपादारविन्दतले। स्वामिमहोदय-गुणमुग्ध-पाम्बानवासि-पक्षतोऽभिनन्दनं पपाठ श्रीनागलिङ्ग-पिले-महोदयः।

अस्याभिनन्दनस्योत्तर-रूपेण स्वामिमहोदयोऽदाद्भाषणमेकं नातिदीर्घम्। जलद-गम्भीर-कण्ठेन श्रीविवेकानन्दः प्रोवाच—"यत् प्रेम रामनादराजो मह्यं प्रदर्शितवान्, तत्र कृतज्ञतावेगं प्रकटयितुं नास्ति ममो काचिद् भाषा। यदि मया किञ्चित् कार्यं भारत-हिताय कृतं, तर्हि तदर्थं निखिलं भारतमृणग्रस्तमस्यैव महापुरुषस्य। यतो मह्यं विलायतगमने प्रथमप्रोत्साहनं प्रदत्तमनेनैव। मम विलायतगमनं सार्थकीकर्तुं प्रथम-प्रयत्नश्चास्यैव महात्मन आसीत्। यद्येतादृशोऽन्ये केचन राजानो भारतहितार्थं प्रयतेरन्, तदाऽवश्यमेव तैर्भारतवर्षस्य प्रभूत उपकारः संसाधयितुं शक्यः। (३)

---

२) काण्डितोऽनुराधा-पुरस्य दूरत्वं षष्टि-क्रोशमितम्, ततश्चत्वारिंशत्-क्रोशमितं दूरत्वं जाफ्ना-नगरस्य। स्थानेऽस्मिन् सेभियारदम्पतिभ्यां सह स्वामिमहोदयोऽगच्छदश्वयान-योगेन। पथि च किञ्चनाघटनमपि समघटत।

३) भाषणमिदं भारतवासिनां जातीय-जीवनोन्नति-साधनार्थं स्वामिमहोदयस्योपदेश-परिपूर्णम्। भारतस्य पुनर्जागरणमत्र परमसुन्दर-भाषया वर्णितं स्वामिमहोदयेन। सुष्ठु स प्राह—"महानिद्रानिद्रितः शवो जागर्तीति।......नान्या काऽपि तस्य मङ्गलपथे बाधा भवितुमर्हति। कुम्भकर्णस्य दीर्घनिद्रा भवत्यपसृते''ति।

सभाभङ्गानन्तरं स्वामिमहाराजो नेतव्य आसीद्विश्रामाय परम-शोभित-भवनेऽश्ववाहित-शकटेन। किन्तु पथि रामनाद-राजादेशेनाश्वाः शकटमुक्ता बभूवुः। राजा स्वयं परमोत्सुकया जनतया सह शकटं समाचकर्ष। गुरु-गौरवधन्य-रामनादाधिपति-भास्करवर्मसेतुपतेस्तस्मिन् दिवसे काचन द्विधा नासीज्जगन्नाथस्य भगवतो रथरज्जु-समाकर्षणे।

पाम्बानात् समागत आसीत् स्वामिमहाराजो मूल-भारतभूमिम्। मूलभारतभूमेर्यस्मिन् स्थाने स्वामिमहाराजः पदार्पणं चकार, तत्र राज-शिष्येण रामनादाधिपतिना भास्करवर्मसेतुपतिना विनिर्मितः किल कश्चनोच्चतया प्रायेण सप्तविंशतिकरसम्मित एकः स्तम्भः। तत्र 'सत्य-मेव जयते' इतिमुखबन्धेनगंलभाषया लिखिता काचन लिपिर्विद्यते, यस्या अयमर्थश्छन्दसाऽस्माभिर्निबध्यते—

वेदान्तस्य जयप्रचार-महिमोत्तुङ्गां पताकां शुभाम्  
उड्डीनां विदधत् स्वयञ्च विजयी पाश्चात्त्य-देशेऽखिले।  
स्वैरिंलण्ड-निवासिभिः परिवृतः शिष्यैर्विनीतात्मभिः  
प्राथम्येन चकार यत्र हि विवेकानन्द-देवः पदम्॥ १२७

सूर्याश्वाङ्क-वसु-क्षपेश-विमिते ख्रीष्टीय-संवत्सरे  
षड्विंशाङ्कित-जानुयारि-दिवसे तद् भारतीयक्षितौ।  
श्रीमद्भास्करवर्म-सेतुपतिना श्रीमद्गुरोः प्रीतये  
स्तम्भः सम्प्रति रामनाद-धरणीपालेन संस्थाप्यते (१)॥ १२८

---

१) The monument erected by Bhaskara Setupati, the Raja of Ramnad, marks the sacred spot, where His Holiness Swami Vivekananda's blessed feet first trod on Indian soil, together with the Swami's English disciples, on His Holiness's return from the western Hemisphere, where glorious and unprecedented success attended His Holiness's philanthopic labours to spread the religion of the Vedanta. January 27, 1897."

तदनन्तरं स्वामिमहाराजः समायातो रामनादं, भास्करवर्मणो राजधानीम्। तत्र राजोचिताऽऽसीत् संवर्धना स्वामिमहोदयस्य। अहो चित्तोन्मादी परिवेशस्तत्र—राजप्रासादाज्जजृम्भे महानालिकनिर्गतो भीम-ध्वनिः; पत्र-पुष्प-पल्लवैः सुसज्जिता राजवीथ्यः सर्वाः; आंग्लदेशीय-सर्वविधवाद्यैक्यतानादिकम्; स्वामिमहोदयस्य पश्चात् पश्चात् राज-राजभ्रातृसमुच्चकर्मचारिणाम् अनुगमनम्, सुसज्जित-सभामण्डपे चतुष्पार्श्वेषु चाग्रहाकुलापरिसीमजनता। सर्वसीमातिशायि खलु स्वामिमहोदयस्याभिनन्दनम्। राजभ्रात्रा दिनकरसेतुपतिना पठितमासीदभिनन्दनपत्रम्।

रामनादानन्तरं स्वामिमहाराजः पारमकुडि-मानमादुरा-मादुरात्रिचिनोपल्ली-ताञ्जोर-प्रभृतिषु नगरीषु विशेषेणाभिनन्दनं लेभे। ततः स्वामिमहाराज आजगाम कुम्भकोणम्। कुम्भकोणं-नगरेऽपि स्वामिमहाराजो लेभेऽभावनीयाभ्यर्थनमजस्राभिनन्दनमपरिसीम-समादरश्च। उच्चावचाः शिक्षिताशिक्षिता धनिदरिद्राः सहस्र-सहस्रजना भारतश्रेष्ठमिमं भारतश्रेष्ठधर्मदूतं पाश्चात्यविजयिनं स्वामिमहाराजं द्रष्टुं तस्य भाषणं च श्रोतुं धावन्ति स्म।

माद्राज-नगरे स्वामिमहाराजस्याभिनन्दनाय या प्रस्तुतिरासीत्, तस्यास्तुलना दुर्लभैव। समग्रा माद्राजनगरी नरीनृत्यमानेव विविधविचित्र-पत्र-पल्लव-पुष्पादिसुसज्जिता प्राणप्रियतमं जनं परिजग्राह हृदयाभ्यन्तरे। प्रतिसौधमासीत् पताकोड्डीना। प्रतिमार्गश्च सुमहती तोरणमाला। फेब्रुयारीमासस्य षष्ठदिवसप्रारम्भे नगरवासिनः शतशः सहस्रशोऽगच्छन् शकटविरामस्थानाभिमुखम्। बाष्पीयशकटे प्रविशति विरामस्थाने सहस्र-सहस्र-कण्ठोत्थित-जयध्वनिराकाशपाताले मुखरीचकार। माननीय-विचारपति-सुब्रह्मण्यायार-महोदयस्य नेतृत्वेन संघटिताऽभ्यर्थनासमितिः स्वामिमहोदयं पुष्पमाल्येनाभ्यर्थयामास। ततः स्वामिमहोदयस्याश्वशकटं शनैः शनैः एटर्णि-विलिगिरि-आयेङ्गार-महोदयस्य

प्रासादोपमाट्टालिकाभिमुखं (१) प्रचचाल। शकटे कियद्दूरं गते उत्साहि युवकवृन्दमश्वान् विमुच्य स्वयमेव शकटम् उवाह। मार्गस्य सर्वत्र स्वामिमहोदयस्य शिरस्यविरामं सहस्रकरनिक्षिप्ता पुष्पवृष्टिः पपात। नार्यः पुरुषाश्चागणिता नारिकेलादिफलपुष्पार्घ्यसमेतास्तस्मै श्रद्धोपहारं ददुः। कुत्रापि वा पुरनार्यो राजमार्गे दण्डायमानास्तं पञ्चप्रदीपैरारात्रिकयोगेन पूजयामासुः। सश्रद्धं ददुश्चार्थोपहारम्। यत् सत्यम् ईदृशसंवर्धनां जगति कोऽपि कुत्रापि न लब्धवान् इत्युक्तिर्नातिशयोक्तिमर्यादामधिकरिष्यति। स्वामिमहोदयोऽत्र स्वगुरुभ्रातरं श्रीशिवानन्दमहाराजं दृष्ट्वा परमानन्दं लेभे। (२)

काचनोच्चवंशसंभूता वृद्धमहिला कठोर-परिश्रमेण जनतामतिक्रम्य स्वामिमहोदयस्य शकटस्य पुरतः समायाता निरर्गलाश्रुधारं रोदितु-

१) Castle Kernon.

२) माद्राजनगर्याः "भिक्टोरिया-हल्"-समाख्य-भवने स्वामिमहोदयमुद्दिश्य अभिनन्दनपाठकः प्राह—

> सर्वेषु धर्मेषु सहिष्णुभावो भ्रातृत्वबोधो निखिले मनुष्ये।
> त्वदुक्तया भारत-मर्मवाण्या पौरस्त्य-पाश्चात्त्य-समन्वयोऽभूत्॥

सत्यं तव भाषणप्रभावात् जगदद्य विश्वसिति—

> देशस्य कस्यापि धनं न धर्मो न सम्प्रदायस्य न चापि जातेः।
> तिष्ठन्नयं मानवहृद्गुहायां नभोनभस्वानिव सर्वसेव्यः॥

एवमन्यत् बहु।

खेतडी-महाराज-प्रतिनिधिश्च स्वामिमहोदयमुद्दिश्य प्राह—"स्वामिमहाराज! अनुपमचरित्र-निष्कामकर्म-भागवत-प्रेरणाऽननुमेयधिषणागौरवाद् यान्त्रिक-सभ्यता-प्रधानदेशे धर्मरस-संप्रसारणं भवत्येव युज्यते। भवद्विघोषितवेदान्तधर्म एव विश्ववासिनां सर्वेषां शान्तिकारणमिति सुष्ठु प्रतिपादितं भवता॥ युगसन्धिक्षणे भवान् राजतेऽस्माकम् आशा-शान्ति-प्रेम-द्रुमरूपेण। भवत्कृपया देशादस्मात् अपयातु सम्प्रदाय-वर्ण-भेदादि-मूलको द्वेषः।

मारेभे। भावोन्मत्त-गद्‌गद-मधुकगठी सा शिववृद्धा स्वामिमहोदयं द्रष्टुं समायाता, मृत्योरनन्तरं शिवलोकमवश्यमेव सा यास्यतीति मत्वा।

माद्राजनगरं स्वामिमहोदयो नव दिवसानध्युवास ; तेषु दिवसेषु तेलेगु-संस्कृत-प्रभृतिभाषासु विलिखितानि चतुर्विंशति-संख्यकाभिनन्दन-पत्राणि तस्मै दत्तानि। कालेऽस्मिन् स्वामिमहोदयेन 'मम-समरनीतिः', 'भारतस्य-ऋषिगणः', 'दैनन्दिनजीवने वेदान्तशास्त्रम्', 'भारतस्य भविष्यत्'-प्रभृत्यभिधया प्रख्यातानि भाषणानि दत्तानि। स्वामि-महोदय उवाच—"भो बन्धुगण! ममायं सङ्कल्पो यद् भारतवर्षेऽहं कतिचन शिक्षालयान् स्थापयिष्यामि। तेष्वस्माकं युवका भारते भारत-बहिर्भूतदेशेषु च अस्माकं शास्त्रनिहित-सत्यनिकर-प्रचारार्थं शिक्षां प्रदास्यन्ते। मानुषः केवलं काङ्क्षितः, केवलं मानुषः; अन्यत् सर्वं स्वत एव संजनिष्यते इति ध्रुवम्। अद्यत्वे प्रयोजनं किल वीर्यवतां सम्पूर्णाकपटानां तेजस्विनां च युवकानाम्। ईदृश-शतसंख्यक-युवक-साहाय्येन जगतो भावस्रोतःपरिवर्तनं सुशकमेव। अन्यान्य-सर्ववस्तुभ्य इच्छाशक्तेः प्रभावः समधिकतमः। इच्छाशक्तिसमक्षमन्यत् सर्वं

श्रीविवेकानन्दः शनैः शकटोपरि रक्षितं मञ्चमारुह्य प्राह—

धर्मोऽस्माकं श्वास-निश्वासरूपः सन्त्येतेन प्राणिता भारतीयाः।
भित्तिश्चायं सुस्थिरा भारतस्य सोऽलङ्कारो वित्तभाजां प्रतीच्ये॥

किञ्च—

प्रेम्णो वा भुवने जयोऽद्य भविता वैरस्य वेति द्वयं
विश्वेषां पुरतो विराजति शिरःशूलं समुत्पादयत्।
अत्रास्ते धरणी द्विधैव घटिता प्राच्य-प्रतीच्यात्मना
कामं भारतवर्षमिच्छतितमां प्रेम्णैव जेतुं जगत्॥

वयं त्यागमन्त्रदीक्षिताः ; अन्ये देशाः सर्वे केवलं ग्रहण-कुशलिन इति। विषमोऽयं कलहः, अस्त्रशस्त्रप्रयोग-कुशलतास्पर्धिनि जगति कुत्र भारतवर्षस्य स्थानम्? शमदम-शिक्षाप्रधाने भारतवर्षे द्वन्द्वकोलाहलस्य कुतोऽवसरः।

निःशक्तिकं प्रजायेत । यतः सेयमिच्छाशक्तिः साक्षादीश्वरात् समायाति।

बहुशताब्दीयावत् जनाः सर्वे शिक्षां ग्राहिता मानव-हीनताज्ञापक-मतवादविषये । तेऽकिञ्चित्कराः प्रयोजनहीनाश्चेति तेभ्यः शिक्षा दत्ता । तामात्मावमाननकरीं कुशिक्षामपसार्य भवत यूयं स्वशक्ति-विश्वासपराः। स्व-स्नायुमण्डलीं कुरु सतेजस्काम्। अस्माभिः लौह-कठोर-पेशीमण्डली-विमण्डितैरवश्यमेव भाव्यम् । वयं क्रन्दनमुखरा बहुकालम् अतिवाहितवन्तः। अधुना क्रन्दनेनालम्। साम्प्रतं स्वपादयुगलोपरि आत्मभारं रक्षत, दण्डायमानाश्च भवत। अस्माक-मद्य दृशवादैरीदृशधर्मैश्च प्रयोजनं यैर्वयं प्रकृतमनुष्या भवेम। यथा प्रकृतमनुष्या उत्पद्येरंस्तथा सर्वाङ्गसम्पन्ना शिक्षाऽस्माकमावश्यकी। पुनः—यस्मिन्नासेविते तव शारीरिकी मानसिक्याध्यात्मिकी च दुर्बलता न जायते तदेव सत्यं तद्विपरीतं त्वसत्यं विषवत् परित्याज्यमेव। यस्य प्राणा न विद्यन्ते, न तत् सत्यम्। सत्यं बलप्रदम्। सत्यं पवित्रताविधायकं ज्ञानस्वरूपञ्च।

जनाः स्वदेशहितैषितां बहुमन्यन्ते। अहञ्च स्वदेशहितैषितायां विश्वासी। स्वदेशहितैषिताविषये ममास्ते कश्चनादर्शः। महति कार्ये वस्तूनि त्रीण्यावश्यकानि। तत्र प्राथम्येन हृदयवत्ता ; पश्यन्तु तावच् श्रीमन्तः बुद्धिर्विचार-शक्तिर्वा कियत् अस्माकं साहायकं विधत्ते? तयोः साहायकेन कतिचनैव पदानि केवलं गन्तुं वयं शक्नुमः। किन्तु हृदयद्वारेणैव महाशक्तेः प्रेरणा समायाति। प्रेमैव करोत्यसम्भवं सम्भवपरम्। जगतां सर्वं रहस्यं प्रेमिकसकाशे चिरप्रकाशम्। भो भावि-देशहितैषिणः! यूयं भवत हृदयवन्तः प्रेमिकाः। अपि युष्माक-मत्र बोधो जागरितो यन्न केवलं जनाः कोटिशोऽनाहरहेतोर्म्रियन्ते ; पुनरन्ये कोटिशोऽप्यर्धाहारहेतोर्मृतप्राया इति? सत्यं किं यूयं जानीथ यदज्ञानकृष्णमेघो निखिलभारतगगनं समाच्छाद्य विराजते? अप्येतत्

सर्वं ज्ञात्वा यूयं व्याकुला जाताः? अप्येतच्चिन्ताक्लिष्टा यूयं युष्माकं नाम-यशःश्री-पुत्र-सम्पत्त्यादिकं सर्वं—किमन्यत् शरीरमपि विस्मर्तुं समुद्यताः? अपि युष्माकमीदृश्यनुभूतिः सत्यं जाता? यदि तादृश्यवस्था सत्यं जाता, ततो जानीहि—देशहितैषणा-सोपान-राशेः प्रथमसोपानमात्रं यूयमारूढाः। वृथावाक्यैः समय-मयापयन्तः किमु कार्यपथमाविष्कृतवन्तो यूयम्? लोकान् अभर्त्सयित्वा अपि यथार्थं साहाय्यं तेषां विधातुं समर्था यूयम्? स्वदेशवासिनामिमां जीवन्मृतावस्थामपनोदयितुं तेषां घोरदुःखसमयेऽपि अपि यूयं समर्थास्तान् सान्त्वनावाक्यानि श्रावयितुम्?

अत्रैव न कथायाः शेषः। श्रूयतामन्यदपि। अपि यूयं पर्वतप्रायान् विघ्नानतिक्रम्य कार्याणि कर्तुम् उद्युक्ताः? यदि समग्रं जगत् तरवारि-हस्तं राजते युष्मद्विपक्षे दण्डायमानं, तथापि किं यूयं सत्यरूपेण युष्मभ्यं प्रतिभा-वस्तुनः अनुसरणे समर्था भविष्यथ? किं युष्माकं तादृशं दार्ढ्यं वर्तते?

यदि एतत् सर्वं युष्माकं विद्यते, तर्हि यूयं सर्व एवालौकिक-कर्म-सम्पादने समर्था भविष्यथ। आगामि-पञ्चाशद्वर्षाणि सेयं परमा जननी मातृभूमिर्युष्माकं भवत्वाराध्या देवी; अन्याः प्रयोजनहीना देवता युष्माभिर्विस्मर्यन्ते चेत् न तत्र काचन क्षतिः। अन्या देवताः सर्वा निद्रामग्नाः। सेयमेका देवता जन्मभूमिः साम्प्रतं जागरिता। सर्वत्र राजन्ते तस्या हस्ताः, सर्वत्र तस्याः कर्णाः। सर्वं व्याप्य सा स्थिता। कथं यूयं प्रयोजनहीन-देवता-सन्धाने धाविता भवथ? पुरतस्तव सा देवता तिष्ठति, किं तस्याः पूजा-सम्पादनेऽपारगा भवत? यद्येनां देवतां पूजयितुं शक्यथ, तदा अन्यासां देवतानां पूजनेऽपि यूयं समर्था भविष्यथ।" (१)

(१) स्थानान्तरे भाषणदान-प्रसङ्गेन स्वामिमहाराजः कम्बुकण्ठेन प्राह—"अहं जानामि किल यथा प्रत्येकं जनानां, तथा प्रत्येकं जातीनामपि जीवनस्य

उद्देश्य-विशेषो विद्यत एव। असावुद्देश्य-विशेष एव तस्य जीवनस्य केन्द्र-स्वरूपः तस्य जीवनसङ्गीतस्य प्रधानस्वरश्च। अन्ये स्वराः प्रधानस्वरेण सङ्गता ऐक्यतानमुत्पादयन्ति। कस्यचन देशस्य जीवन-शक्ती राजनैतिकाधिकारे—यथा इंलण्ड-देशस्य। देशान्तरस्य पुनः कलाविद्यासमुन्नतौ। कलाविद्या-समुन्नतिरेव तस्य जीवनस्य केन्द्रस्वरूपा--स एव जातीय-जीवन-सङ्गीतस्य प्रधानः स्वरश्च।

यदि काचन जातिस्तस्या जीवनीशक्तेर्बहुशताब्दीव्यापि-स्वाभाविक-परिणति-लब्धं विषयं परित्यज्य विषयान्तरं प्रति धावति, लभते च तस्मिन् कथञ्चित् साफल्यं--तथापि तस्या मृत्युरनिवार्य एव। एवमेव यूयं यदि धर्मं केन्द्रमविगणय्य धर्मस्य जातीय-जीवनशक्तित्वमस्वीकुर्वाणा राजनीतिं समाज-नीतिमन्यां वा काञ्चन नीतिं तत्स्थले स्थापयेत तदा यूयं पूर्णविनाशमवाप्स्यथ"।

"ममायं सङ्कल्पः—प्राथम्येनास्मच्छास्त्र-भाण्डार-सञ्चितानि मठेष्वरण्येषु च गुप्तभावेन रक्षितानि कतिपयैरेव जनैः स्वायत्तीकृतानि धर्मरत्नानि बहिराने-तव्यानि। येषां करतलेषु स्थानान्तरेषु वा तानि संरक्षितानि, केवलं तत्तत्-स्थानेभ्यस्तेषां समुद्धरणेनैव न भवेदस्माकं कार्यसिद्धिः, परं ततोऽपि दुर्भेद्यपेटिका-रूपात् शत-शत-शताब्दी-सञ्चितात् संस्कृत-परिभाषा-शब्दसम्भार-रूपावरणात् तानि बहिरानेतव्यानि। स्वल्पाक्षरैर्वच्मि चेत् इत्थं वक्तव्यम्--अहं तानि तत्त्व-रत्नानि साधारणजन-लभ्यानि कर्तुं वाञ्छामि। अहं वाञ्छामि तानि तत्त्वानि साधारणजनस्य—प्रत्येकं भारतवासिनां सम्पद्रूपेण राजन्तां —जानन्तु वा नवा प्रत्येकं भारतवासिनः संस्कृतम्"।

"युष्माकं परिज्ञातं--"मातृ-देवो भव, पितृ-देवो भवे"ति अहं वदामि, "दरिद्र-देवो भव, मूर्ख-देवो भव"। अर्थात्--दरिद्र-मूर्ख-ज्ञानहीन-पीडिता भवन्तु युष्माकं देवताः। एतेषां सेवामेव परमधर्मं जानीत। ईश्वरान्वेषणाय कुत्र युष्माभिर्गन्तव्यम्? अपि दरिद्र-दुःखि-दुर्बला न युष्माकम् ईश्वरप्रतिमाः? प्राथम्येन कथं न तेषां सेवां कुरुथ? गङ्गातीरे वसन्तः कथं कूपखननं कुरुथ? प्रेम्णः सर्वशक्तिमत्तायां विश्वास-परायणा भवत।"

इतः पूर्वमपि रामेश्वर-मन्दिर-चत्वरे दण्डायमानः स्वामिमहाराजः कम्बुकण्ठेनोद्घोषयामास—"यत्र जीवस्तत्र शिवः" एतन्महामन्त्रानुप्रेरणया नराणां नारीणाञ्च सेवाकर्मणि उन्मुखीभावः खल्ववितथ-शिवभक्तिः। केवलमासनग्रहणेन शिवस्याङ्गप्रत्यङ्ग-चक्षुः-कर्णनासिका-रूपसौन्दर्य-प्रशंसापूर्वकं स्तोत्रपाठैर्यः प्रतिमाविशेपसेवायामात्मानं नियुङ्क्ते, स नितान्तं भण्ड एव"।

स्वामिमहोदयो भूयोऽप्युपदिदेश—"जाति-वर्णनिर्विशेषं सबल-दुर्बल-निरपेक्षं नर-नारी-बालक-बालिकाः सर्वा इयं शिक्षाऽवश्यमेव प्रापयितव्या यत् सबलदुर्बलोच्चनीचनिर्विशेषं सर्वेष्वेव आत्मा विराजते। सर्वे महान्तो भवितुमर्हन्ति, सर्वे साधवो भवितुमर्हन्ति।"

प्रचलितां समाजव्यवस्थां चिन्ताधाराञ्च धिक्कृत्य स्वामिमहोदयः प्राह—"यूयं शून्ये विलीना भवत, पुनर्नवीनं भारतमभ्युदेतु। नवीनं भारतं समुदेतु कृषक-कुटीरं समाश्रित्य हलैः सुशोभितकरम्; मत्स्यजीवि-माल्यकार-हरिजनानां स्थालीतः, क्षुद्र-वैपणिक-पण्यशालात-स्तथा च पथिपार्श्वगतानामग्निसंयोगेन खाद्यनिर्मातॄणां चुल्लीतः। तत् समायातु कारुशालातः, हट्टतो वा"।

कलिकाता-नगर्यां स्वामिसंवर्धना।

कलम्बो-नगरीतो माद्राजनगरपर्यन्तं सर्वत्र भाषणदानाभिनन्दन-ग्रहण-प्रत्युत्तर-दान-कथनोपकथनादराप्यायनोपभोगप्रभृतिभिः श्रान्त-क्लान्तस्य सन्न्यासिमहाराजस्य शिष्या अनुरागिणश्च सर्वेऽमन्यन्त यत् माद्राजतः कलिकातापर्यन्तं बाष्पीय-शकटेन गमनं चरम-क्लान्तिकरं भविष्यति श्रीविवेकानन्दस्य। सुदीर्घोऽयं मार्गः; पुनः सातिशयं श्रान्तश्च सः। ततो माद्राजतः समुद्रपथेन स्वामिमहोदयस्य कलिकाता-गमनमासीन्निर्धारितम्।

बाष्पीय-जलयानेन स्वामिमहोदयो माद्राजतः कलिकातां

प्रागच्छत्। कलिकातावासिनस्तथा तदितर-वङ्गवासिनः सर्वे स्वामि-महोदयाय अभिनन्दनज्ञापनार्थं समुत्कण्ठिता बभूवुः। दिवसगणन-तत्पराणां तेषां होराऽपि दुरतिक्रमासीत्, का कथा दिनातिक्रमणस्य।



तेषामयं परस्परालापोऽश्रूयत—

पुरा कान्त-श्रीको य इह कलिकाताख्य-नगरे
व्यतीयाय क्रीडारस-घनतया शैशव-वयः।
किशोरः कैशोरीं विदधदपि लीलां बहुमुखीं
व्यतानीदानन्दं मधुमधुरकण्ठेन च नृणाम्॥ १२९

स एवायं बालः कतिपयसमाभ्यः किल परं
विधायात्याश्चर्यां कृतिमतनुमन्यत्र विषये।
प्रचार्य स्वं धर्मं शम-दममयं साम्यमधुरं
समेतः पाश्चात्यादिह बहुमतो विश्वविजयी॥ १३०

विश्वविजयि-सन्न्यासि-समुचिताभिनन्दन-दानाय परम-शक्ति-शालिनी कार्यकरी समितिरेकाऽसीद् विनिर्मिता। तस्याः सभापतिरभूद् 'द्वारभाङ्गा'महाराजः। स्वामिमहोदयस्य वाष्पीय-जलयानं खिदिर्पुराञ्चले विश्रामं लेभे। अभ्यर्थनासमितेः सुव्यवस्थाफलेन स्वामिमहोदयस्य खिदिर्पुराञ्चलतः "शियालदह"-नामक-शकट-विराम-स्थानपर्यन्तमागमनाय बाष्पीयशकटमेकमासीत् स्थिरीकृतम्। तत्रागत्य स्वामिमहोदयो ददर्शापूर्वं दृश्यम्—यावद्दूरमवलोकयितुं शक्यते तावत् अगणित-नरमुण्डानि चतुर्दिक्षु—नान्यत् किमपि। स्वामिमहोदयस्य दर्शनमात्रेण लोकारण्यं जनसमुद्रो वा दुर्वारो बभूव। "श्रीरामकृष्ण-जयः" "श्रीविवेकानन्दजय" इत्यादिक-जयध्वनिकल्लोलैः स्फीततमो बभूव पारहीनोऽनन्त-जनपारावारः—अभूतपूर्वं तद्दृश्यं यस्य कल्पनाऽपि सम्यक्तया कर्तुं न पार्यते। महता कष्टेन "इण्डियान् मिरार"-पत्रिका-सम्पादक-नरेन्द्रनाथसेन-प्रमुखम् अभ्यर्थनासमितिसभ्यवृन्दं स्वामि-महोदयसमीपमागत्य तस्मायभिनन्दनं विज्ञापयामास, तं पुष्प-माल्यादिभिर्भूषितं च चकार।

स्वामिमहोदयस्य कृते एकं "ल्याण्डो"-शकटम् आसीत् सज्जितम्। सेभियारदम्पतिभ्यां सह स्वामिमहाराजस्तस्मिन्नुपविवेश। नातिदूरं व्रजति तत्रभवति अभिनव-सन्न्यासिनि वङ्गजनन्या असम-सुसन्ताने—परमोत्साहिनश्छात्रा अश्वान् विमोच्य स्वयं स्वामिमहोदयं शकट-रज्जुकर्षणेन वागवाजार-पशुपतिवसुमहोदय-धामपर्यन्तं निन्युः। तत्रासीदेतेषां महानानन्दः श्रद्धा-प्रीति-भक्तीनां चरमप्रकाशश्च।

पशुपतिवसु-महोदयस्य वासभवने एव बभूव स्वामिमहोदयेन सह तस्य गुरुभ्रातॄणां सन्दर्शनम्। अत्रासीत् स्वामिमहाराजस्यानन्द-परकाष्ठा—अननुमेय-सतीर्थत्वहेतोः। अपराह्णसमये स्वामिमहाराजो जगाम काशीपुरस्थ-गोपाललाल-शीलमहोदयस्य उद्यानं यत्र पाश्चात्त्य-शिष्य-शिष्याभिः सह स्वामिमहाराजस्य वासस्थानं स्थिरीकृतमासीत्।

स्वामिमहोदयस्य कलिकातागमनस्य सप्ताहकालादनन्तरं कलिकाता-वासिनां पक्षतः सार्-राधाकान्त-देववाहादुर-महोदयस्य शोभाबाजार-स्थित-सुविस्तृत-प्रासाद-प्राङ्गणे राज-विनयकृष्ण-देववाहादुरस्याध्यक्षेणा-भिनन्दनसभाऽऽसीदाहूता। विशिष्टनागरिकाः, पण्डिताः, इउरोप-वासिनः, विशेषेण महाविद्यालय-विद्यार्थिनो निर्दिष्टसमयात् प्रागेव समुपस्थिता गभीरोत्कण्ठया कालं निन्युः।

स्वामिमहाराजस्य सभास्थल-प्रवेशमात्रं समवेत-जनतैकजनवत् ससम्मानं समुत्थाय जयध्वनिमुच्चारयामास। सभापति-राज-विनय-कृष्ण-वाहादुर-महोदयो रौप्याधारस्थितमभिनन्दनपत्रं स्वामिमहोदयाय ददौ। अभिनन्दनोत्तरमुखेण स्वामिमहोदय आवेगप्रकम्पितकण्ठेन यद्बभाषे, मन्त्रमुग्धजनतावक्षसि प्रतिवर्णं तज्जनयामासानन्दहिल्लोलम्। वङ्गवासिनस्तद्दिवसे प्रापुर्नवभारत-सङ्घटनामोघ-संकेतं, स्वदेशप्रेम-सञ्जीवनवाणीम्, अव्यर्थ-निर्देशममोघ-मन्त्रञ्च। (१)

१) परम-मधुरः खलु स्वामिमहोदयस्य वक्तृता-प्रारम्भांशः। उत्थायैव स्वामिमहोदयोऽवादीत्—

स्वामिमहोदयः प्राह—

"भद्रमहोदयाः! भवन्तो मम हृदयस्य गभीरतम-तन्त्र्यामाघातं कृतवन्तः—मम गुरुदेवस्य, ममाचार्यस्य, मम जीवनादर्शस्य, ममेष्टस्य, मम प्राणदेवतायाः श्रीरामकृष्ण-परमहंसदेवस्य नामोच्चारणेन। यदि कायेन मनसा वाचा वा मया किमपि सत् कार्यमनुष्ठितं, यदि मन्मुखादीदृशं किमपि वाक्यं निर्गलितं यस्य फलेन कोऽपि जनः कञ्चनोपकारं लब्धवान्—तत्र नास्ति मे गौरवं किमपि। तत् सर्वं खलु मम गुरुदेवस्य। किन्तु मम जिह्वा यदि कदापि अभिशाप-वर्षणं कृतवती, यदि मन्मुखात् कदाचन कस्यचनासूया-विद्वेषमूलकं वाक्यं निर्गलितं स्यात्, निश्चितं दोषोऽसौ ममैव। यत्-किञ्चिद्बलप्रदं जीवनप्रदं वा, सर्वं तत् तस्य शक्तेर्लीलाङ्गीभूतं, तत् तस्य वाणी वा तत् स स्वयमेव। बन्धवः! सत्यं, जगदद्यापि तस्य नरवरस्य समुचितं परिचयं न जानाति। जगदितिहासशास्त्रे शतशत-पुरुष-चरित्राण्यस्माभिः पठ्यन्ते। साम्प्रतं वयं यादृश-जीवनचरितानि तेषां लभामहे, तानि शतशत-शताब्दीमित-समयाभ्यन्तरे शिष्य-

---

सम्बन्धं जगतो जिहासति जनः सत्यं स्वमुक्तीच्छया
दूराद्दूरतरं प्रयाति च सुत-स्त्री-तात-मात्रादितः।
स्वीयां सप्त-वितस्तितामपि पुनर्विस्मर्तुमेवेहते
तत्राप्येष शृणोति कञ्चन कलं प्रोद्भूतमन्तस्तलात्॥

स च कलः "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति। भूयोऽपि कलिकातानिवासिनः संबोध्य स प्राह—

संन्यासि-साधु-विधया भवतां समीपे
धर्मप्रचारकतया न च वाऽऽगतोऽस्मि।
नूनं पुराणदिन-नागरिकात्मनाऽहं
प्रागां विवक्षुरिह काञ्चन मर्मवाणीम्॥

**प्रशिष्य-परिवर्तन-परिवर्धनपुष्टानीति परिज्ञाय। सहस्र-सहस्र-वर्षाणि यावत् तानि महापुरुषजीवनचरितानि घर्षण-परिष्करण-साहाय्येन मसृणीकृतानि; तथापि—यन्महापुरुषजीवनं मया स्वचक्षुर्भ्यां दृष्टं, यस्य च्छायायामहं न्यवसं, यस्य पादतलोपविष्टोऽहं शिक्षां लब्धवान्, तस्य श्रीरामकृष्ण-परमहंसदेवस्य जीवनं यादृश-मुज्ज्वलं महिमान्वितं वा—नान्यत् किमपि चरित्रं तादृशमित्यहं ध्रुवं मन्ये" (१)।**

---

१) ततो भाषणेऽस्मिन् 'अभी'-मन्त्रेण सर्वान् प्रोद्बोध्योवाच—"उत्तिष्ठत, जाग्रत, प्राप्य वरान् निबोधत" ( कठोपनिषत् १।३।१४ )—अर्थात् यत्काल-पर्यन्तं युष्माकमभीप्सितं वस्तु न लब्धं भवेत्, तावत्कालपर्यन्तं तल्लाभाय निरन्तरं चरत इति श्रुतिवाक्यनिष्कर्षः"।

अथ कलिकातावासिनो युवकान् संबोध्य स्वामिमहोदयः प्राह—"कलिकातावासिनो युवकाः! सर्वदा कर्मपथे चलत। यतः शुभमुहूर्तं समागतम्। साम्प्रतमस्माकं सर्वविषयक-सुयोगावसरः समायाति। साहसमव-लम्बध्वं, भयं मा कुरुत; अस्माकं शास्त्रं भगवन्तम् एव केवलम् "अभीः" पदेन परामृशति।

अभीः—वयं सर्वथा भवामो निर्भीकाः। ततो वयं कार्यसिद्धिमवाप्स्यामः। "उत्तिष्ठत जाग्रत"—यतो युष्माकं मातृभूमिर्महाबलिं प्रार्थयते। युवकैरिदं महत् कार्यं संपादयिष्यते। युवभिर्द्रढिष्ठैर्बलिष्ठैर्मेधाविभिः सर्वं गुरु कर्तव्यं सम्पादयिष्यते। कलिकातानगर्यामीदृश-युवकानां शतसहस्राणि राजन्ते। युष्माभिरुक्तं मया किमपि कर्म कृतम् इति। यदि तत् सत्यं, तर्हि युष्माभिरेतदप्यवश्यं स्मर्तव्यं यदहमप्येकदा कलिकाता-नगरीसरणिषु नगण्य-बालक इव क्रीडितवान्। यद्यहं किञ्चित् कृतवान्, निश्चितं यूयमितोऽपि समभ्यधिकं किमपि कर्तुं प्रभवेत। "उत्तिष्ठत, जाग्रत," जगद्युष्मानाह्वयति। भारतस्यान्यस्थलेषु राजते बुद्धिबलं धनबलञ्च; केवलमस्माकं जन्मभूमौ उत्-

उपसंहरन् स्वामिमहोदयः प्राह—"वङ्गीय-युवकस्कन्धोपरि समर्पितोऽतिमहान् गुरुभारः। इतोऽधिको गुरुभारो न कदाचन कस्यापि देशस्य युवकदलोपरि समपतत्। अहमतीते षड्वर्षाणि यावत् निखिल-भारतवर्षस्य सर्वत्र पर्यभ्रमम्, तेन संस्कारोऽयं मम दृढो जातो यद्वङ्गीय-युवक-माध्यमेन प्रकाशमेष्यति या चिन्ताधारा, सा भारतवर्षं तत्राध्यात्मिकाधिकारे पुनः-प्रतिष्ठितं करिष्यति। निश्चितं वदामि, हृदयवदुत्साहिवङ्गीय-युवकेषु राजन्ते राजिष्यन्ते च शतशतवीराः, ये अस्माकं पूर्व-पुरुषैः प्रचारितानि सनातनाध्यात्मिक-सत्यानि संप्रचार्य जगतः प्रान्तात् प्रान्तान्तरं भ्रमिष्यन्ति—तथा सुमेरुतः कुमेरुपर्यन्तं च। युष्माकं पुरत एव राजते कर्तव्यमेतन्महत्। अत एव भूयोऽपि युष्मान् —"उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत" इति महतीं वाणीं स्मारयित्वा मम वक्तव्यं समापयामि। भयं मा कुरुत, यतो मनुष्यजातेरितिहासाद्वयं जानीमहे--याः काश्चन शक्तयः प्रकाश-मितास्ताः सर्वाः साधारणजनेभ्य एव। एतदपि सत्यं—यत् किञ्चिज् जगति संघटितं, तस्य पुनरावृत्तिर्भविष्यत्येव। कस्मा-च्चन मा बिभीत। यूयमद्भुतानि कार्याणि किल संपादयिष्यथ। यस्मिन् क्षणे युष्माकं हृदये भयसञ्चारो भविष्यति, तस्मिन् क्षणे एव यूयं शक्तिहीना भविष्यथ। भयमेव जगति सर्वदुःखानां मूलकारणम्; भयमेव समधिकतम-कुसंस्कारः; निर्भीकस्य मुहूर्तेन स्वर्गोऽपि आविर्भवति। अत एव—'उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत'।

स्वामिमहोदयस्य कलिकातागमनात् परं कतिपयदिवसानन्तरं परम-हंसदेवस्य जन्मोत्सवदिवस उद्‌यापनीय आसीत्। दक्षिणेश्वर-

साहाग्निरवश्यमेव प्रज्वलनीयः। अत एव भोः कलिकातानिवासिनो युवकाः! हृदयेषूत्साहाग्निं प्रज्वल्य जागरिता भवत।

भवतारिणी-मन्दिरमेव उत्सवस्थानरूपेण निर्वाचितमभूत्। निर्धारित-दिने स्वामिमहाराजः पाश्चात्त्यशिष्यशिष्याभिः सह तत्र समुपस्थितो बभूव। समागता विपुलजनता वीरसंन्यासि-दर्शनार्थं बभूव चञ्चला।

दीर्घकालादनन्तरं श्रीपरमहंसदेव-भक्तजनान् वीक्ष्य स्वामिमहोदयः परमाह्लादितो बभूव। उत्सवान्ते हर्षयुक्तेन मनसा स प्रत्यागच्छद् आलमबाजारमठम्। इतः कतिपय-दिवसेभ्यः पश्चात् कलिकाता-वास्तव्य-जनगण-पक्षतः स्वामिमहोदयायान्यदप्यभिनन्दनपत्रमासीद्दत्तम्। स्थानमस्य कृत्यस्य निर्णीतम् 'ष्टारथियेटार'-भवनम्। तत्राभिनन्दनस्य प्रत्युत्तर-प्रसङ्गेन स्वामिमहोदयः "सर्वावयव-वेदान्त"शीर्षकं भाषणं ददौ। सनातनधर्म-माहात्म्यविषये स्वामिमहोदयः प्राह—"यदि हिन्दुधर्मस्य पुनरुद्धारः करणीयः स्यात्, तदाऽवश्यमेव हिन्दुधर्मो वेदान्तधर्मभित्तिकः कर्तव्यः। भारतीयजनजीवनस्य सर्वविधप्रगतेरुन्नतेश्च भित्तिरूपेण राजिष्यते वेदान्तशास्त्रम्"।

### श्रीश्रीरामकृष्णसङ्घ-(मिशन)-प्रतिष्ठा

यस्य युगधर्मस्योद्गाता स्वामिमहाराजस्तस्य सारकथा त्यागः, सेवा, मानवप्रेम च। नूनम् अध्यात्मजीवनं तत्रादर्शीभूतम्। किन्तु तत् किल फल्गुस्रोत इवान्तर्वहमानं स्यात्। साधारण-संन्यासिन आदर्शः खलु ध्यानतपस्या-साधनबलेन स्वीयमोक्षः। स्वामिमहोदयमतेन स तु केवलं स्वार्थपरताया नामान्तरमेव।

ततः स्वामिमहाराजो गुरुभ्रातॄन् सर्वान् सङ्घबद्धान् कृत्वा मानव-कल्याणसमर्पितसर्वशक्तीन् कर्तुं यतते स्म। यद्यपि संन्यासिवृन्दं तस्य प्रियतम-नेतारं श्रीस्वामिविवेकानन्दं परमश्रद्धार्हममन्यत, तथापि रूपान्तरितादर्शस्यास्य ग्रहणे तेषां केचन बभूवुः सन्देहपरायणाः। श्रीविवेकानन्दस्तु क्षुरधार-युक्तिसाहाय्येन सदार्ढ्यं तान् स्वमतानु-गान् कर्तुं नितरामयतत। तेनोक्तं यदि रामकृष्णशिष्या युगधर्म-प्रचारव्रतिनो न भवेयुः, श्रीठक्कुरस्यागमनोद्देश्यमपि तर्हि भवेद्

विफलम्। "यत्र जीवस्तत्र शिव" इति मन्त्रबलंप्रयोगेण भूम्नः पूजा-योजनमवश्यमेव करणीयम्। नवभारतस्योद्बोधनाय ईदृश एकः संन्यासि-सम्प्रदायोऽवश्यमेव संघटनीयः, यः सम्प्रदायो नर-नारायण-सेवानियुक्तो मुक्तेः कामनां परित्यज्य सति प्रयोजने, नरकगमनायापि सुसज्जो भवेत्। श्रीठक्कुर-परमहंसदेवोऽवततार 'बहुजनसुखाय बहुजनहिताय' च। असावेव युगधर्मः।

गुरुभ्रातरः स्वामिमहोदयस्य निर्देशमिमं श्रीठक्कुरस्यादेशमिव मन्यमानास्तन्निर्दिष्टेन पथा सानन्दं चलितुमारेभिरे। दाक्षिणात्ये धर्मप्रचाराय श्रीरामकृष्णानन्दः संप्रेषित आसीत्। प्रबलोत्साह-भरेण स्वाम्यखण्डानन्द-महोदयो मुर्शिदाबादाञ्चले तत्कालागतेन दुर्भिक्षेण पीडितानां नरनारीणां हिताय सेवा-यज्ञमारभत। चतु-र्दिक्षु विनिर्मितानि धीरं सुस्थिरं त्यागपताकाशिरस्कानि सेवा-केन्द्राणि। स्वामिमहोदयः परमानन्देन तदा वदति स्म—"आत्मनो मोक्षार्थं जगद्धिताय च" अस्माकं खलु जन्म। सर्वे यूयं समुप-विष्टाः किं कुरुथ ? स्वयं जागरिताः परानपि कुरुत जागरितान्। नरजन्म सार्थकीकर्तुं सेवाधर्मेण कालं यापयत। 'उत्तिष्ठत, जाग्रत, प्राप्य बरान् निबोधत'।

युगधर्मप्रचाराय १८९७ खीष्टाब्दीय-मे-मासस्य प्रथमे दिवसे वाग्-बाजारस्थ-बलराम-बसु-महोदयस्य भवने स्वामिमहोदयो भक्तवृन्दं सङ्घ-बद्धं कर्तुं रचितां स्वपरिकल्पनां समवेतसंन्यासिगृहिभक्तसमक्षं संप्रकटयामास। भक्तगणमुद्दिश्य स्वामिमहाराजः प्राह—"विभिन्न-देश-परिभ्रमण-फलेन ममेयं धारणा दृढीभूता यत् सङ्घं विना महाकार्य-सम्पादनं न संघटते।

वाचां गुरोरमृतसार-सहोदराणां
व्याप्तिभवेज्जगति येन हि तापदग्धे।
येनार्त-मानव-शिवश्च सुसेवितः स्यात्
स्थाप्योऽत्र कश्चन मठो नचिरात् तदर्थम्॥ १३१

कार्यान्तरेष्विव परं मतभेद-वात्या
लब्धास्पदेह कुरुतेऽखिलमाकुलं मे।
अस्माभिरत्र भवितव्यमशेष-धैर्यैः
कार्यं यथा न खलु लेशतया विनश्येत्॥ १३२

किन्तु अस्मद्देशे प्राथम्यादेव बहु-सम्मतिक्रमेण ('भोट'-ग्रहणपूर्वकं) कार्यपरिचालन-पद्धति-प्रवर्तनं न सम्भवपरम्। अतः पश्चाद् यदा शिक्षाविस्तारफलेन साधारण-जनाः समधिकसहृदया भविष्यन्ति, यदा स्वतन्त्रमतानुसारेण कार्याणि कर्तुं शक्ष्यन्ति—कूप-मण्डूकतां विहाय सामग्रिक-चिन्ताव्यापारे समर्था भविष्यन्ति, तदैव साधारणतन्त्रतया सङ्घकार्यं परिचालितं भविष्यति। अतः सङ्घस्यास्य परिचालकपरिषद् एका स्यादेव। सर्व एव तस्या मतमनुसरेयुः। कालेन सर्वेषां मतानुयायि कार्यं प्रचरिष्यति।

"यस्य नाम्ना वयं संन्यासिरूपेण प्रचरामः, यस्याश्रयेण भवन्तः संसाराश्रम-कर्मक्षेत्रेषु राजन्ते, यस्य महातिरोधानाद् विंशति-वत्सरा-भ्यन्तरे प्राच्ये जगति तथा च प्रतीच्ये यस्य पुण्यनाम्नोऽद्भुत-जीवनस्य च आश्चर्यः प्रसारः संघटितः, सङ्घोऽयं तस्य नाम्नैव प्रतिष्ठितो भविष्यति। वयं प्रभोर्दासाः। भवन्तः कार्येऽस्मिन् सहाया भवन्तु।"

गिरिशचन्द्र-प्रमुखा भक्तास्तत्रोपस्थिताः प्रस्तावमिमं सर्वान्तःकरणे-नानुमोदन्ते स्म। ततः संघस्यास्य नामकरणं बभूव "रामकृष्णप्रचारो"-ऽथवा "रामकृष्ण-मिशन्" इति।

अस्य सङ्घस्योद्देश्यं खलु—मानवहितार्थं श्रीश्रीरामकृष्णो यानि धर्ममतानि प्रचारितवान्, यानि च तत्त्वानि तस्य स्वीयजीवने प्रकटी-भूतानि, तेषां धर्ममतानां तत्त्वानाञ्च मानवानां दैहिक-मानसिकाध्या-त्मिकोन्नतये प्रयोगाय सहायताकरणम्।

जगति यावन्ति धर्ममतानि विद्यन्ते तान्येकाखण्ड-सनातन-धर्मस्या-

ङ्गीभूतानीत्येवं मन्यमानानां सर्वधर्मावलम्बिनां मध्ये भ्रातृभावस्थापनाय श्रीरामकृष्णपरमहंसदेवेन यानि कार्याणि कृतानि, तेषामवतारणं परिचालनं चास्य श्रीरामकृष्णसङ्घस्य व्रतम्।

साधारणजनेभ्यो जागतिक-पारमार्थिक-कल्याणविधायक-विज्ञान-धर्मशिक्षादानं, शिल्पकलाप्रभृतीनामुन्नतिसाधनं, वेदान्तो धर्मभावान्तराणि च यथा श्रीरामकृष्णजीवने संप्रकटितानि जनसमाजे तेषां प्रवर्तनञ्चैकान्ततः काम्यमिति हेतोः विचक्षणतम-कर्मिणां संग्रहस्तेषां शिक्षादानञ्चास्य कर्तव्यान्तरम्।

भारतवर्षस्य प्रतिनगरं प्रचारकार्ये आत्मनियोगं कर्तुमिच्छतां गृहस्थानां सन्न्यासिनाञ्च शिक्षार्थमाश्रमस्थापनम्। पुनरपि भारताद्बहिः सङ्घादर्श-पताकावाहि-कर्मिप्रेरणं, वेदान्तवार्ता-प्रचाराय नव-नव-केन्द्र-संस्थापनञ्च।

यः खलु श्रीरामकृष्णसङ्घादर्शं प्रति श्रद्धालुरुल्लिखितोद्देश्य-समूहं प्रति सहानुभूतिसम्पन्नो वा—सोऽस्य सङ्घस्य सभ्यो भवितुमर्हति।

अस्य सङ्घस्य प्रथम-सभापतिरासीत् स्वामिमहोदयः। स्वामि-ब्रह्मानन्दो निर्वाचितो बभूव कलिकाताकेन्द्र-सभापतिः, स्वामियोगानन्दश्च सहकारिसभापतिः। वर्षत्रय-पर्यन्तमस्य सङ्घस्य कर्मसमितेः सर्वाण्यधिवेशनानि प्रतिरविवासरं बलरामवसु-महोदयस्यालय एवानुष्ठितानि बभूवुः।

रामकृष्ण-सङ्घ-स्थापनानन्तरं केचन रामकृष्णभक्ताः श्रीस्वामिमहोदयस्य कार्यावलीं श्रीरामकृष्णभाव-शिक्षा-विरोधिनीममन्यन्त। एकदा कश्चन गुरुभ्राता संन्यासी ( स्वामियोगानन्दः ) सहसा श्रीस्वामिमहोदयमवदत् त्वत्प्रचारितादर्शेन सह श्रीरामकृष्ण-प्रदत्तशिक्षाया नास्ति किञ्चित् सामञ्जस्यम्। स पुनः प्राह—योगतपोध्यानावलम्बनं संन्यासजीवनस्य काम्यं, भगवत्प्राप्तिश्चैकमेव लक्ष्यम्। भक्तिमार्गीय-साधन-माध्यमेन मुक्तिपथे विचरणं संन्यास-जीवनस्य

महाव्रतमिति। स्वामिविवेकानन्दस्ततस्तं सरोषं प्राह—"श्रीरामकृष्ण-विषये किं त्वं जानासि? रे मूढ, शृणु—

त्यक्त्वा क्षेत्रं सरस-हृदयं भक्तिसञ्चार-पूतं
ज्ञानोत्पत्तिर्न भवति मरौ मानसे भक्तिमूढ़े।
भक्तिः क्लैव्यं घटयति पुनः कर्मणा चेद् विहीने-
त्येवं मत्वा विमलमतिभिर्भाव्यमुद्योगवद्भिः॥ १३३

श्रीरामकृष्णस्त्वया यथा बुद्धस्तद्वत् कथं स प्रचारणीयः स्यात्? अलमत्र तवाभिनिवेशेन। तव रामकृष्णाय भक्तिनिवेदनैर्मम किं प्रयोजनम्? श्रुतिवाक्यैर्वा मे किम्? तमोलिप्तान् गाढसुप्तान् मम देशवासिनः प्रोद्बोधयितुं शक्नुयां चेत् वारं वारं कोटिवारं यास्यामि घोर-रौरवमहम्। देशवासिनो मे जागरिता भवन्तु; सुप्रतिष्ठा भवन्तु, भवन्तु च ते कर्मयोगिनः। श्रीरामकृष्णस्य शिष्योऽहं न वा, तेन तव किं प्रयोजनम्? यो मम कार्यपद्धतिमनुसरेत् तमहमनुयामि। स्वमुक्तिं विहाय परमुक्तिविधानाय यो यतेत तस्यानुगामी सर्वथाहं नान्यस्य कस्यचनेति ध्रुवं जानीहि।

श्रीगुरुदेवस्यास्माकं भावा अनन्ताः, पन्थानोऽप्यनन्ताः। ब्रह्मणापि न ज्ञातुं शक्यमस्माकं श्रीठक्कुरस्य भावानामियत्त्वमीदृक्त्वञ्च। यद्येतादृशः स मां तस्य यन्त्ररूपेण स्वीकृतवान्, तर्हि तत्रात्मसमर्पणं विना किं मया करणीयं स्यात्? श्रीरामकृष्णस्य दासोऽहम्। यो गुरुभारस्तेन स्वयं मम स्कन्धोपरि न्यस्तः यावत्कालपर्यन्तं तद्भार-वहनकार्यं न समाप्तिमियात्, तावत्पर्यन्तं न स भगवान् मह्यं विश्राम-लाभानुकम्पां करिष्यति।"

अनेन स्वामिमहोदयस्य वाक्यप्रपञ्चेनान्येषां संशयपराणामपि चेतांसि विमलीबभूवुः।

### स्वामिमहोदयस्योत्तर-भारत-परिभ्रमणम्

रामकृष्णसङ्घ-प्रतिष्ठानन्तरं स्वामिमहोदयोऽभ्यधिकास्वस्थतामभजत।

ततो गुरुभ्रातरस्तमालमोडाप्रेषणाय बद्धपरिकरा बभूवुः। कर्मव्यपदेशेन स्वामिमहोदयः स्वकर्मक्षेत्रेऽवस्थातुं यतते स्म; किन्तु चिकित्सकान् परामर्शक्रमेण तस्य बहिर्गमनमावश्यकमिति हेतोः शिष्यैर्गुरु-भ्रातृभिश्च सह स्वामिमहोदयः १८९७ ख्रीष्टाब्दीय-मे-मासस्य एकादशे दिवसे आलमोडाभिमुखं प्रतस्थे।

स्वामिमहोदयस्य संवर्धनार्थं पण्डित-जओलादत्त-योशी-महोदयस्य नेतृत्वेन संघटितासीत् काचनाभ्यर्थना-समितिः। स्वामिमहोदयस्यागमनानन्तरमभ्यर्थनासमिति-सभ्यवृन्दं तस्मै स्वागतसम्भाषणं विज्ञापयामास। उत्सुकजनसहस्राणामानन्दं विवर्ध्याश्वारोहणेन स्वामिमहोदयः पुरीं प्रविवेश। हिमालयस्य गम्भीर-मनोहर-परिवेश-माधुर्येण प्रत्यर्पितेवासीत् स्वामिमहोदयस्य स्वास्थ्यश्रीः। अत्रापि धर्मपिपासुभिर्जनैः सह धर्मालोचनेन बहुलः समयः स्वामिमहोदयेन व्ययित आसीत्। पुनः प्रत्यहं स्वामिमहोदयेन प्राप्तानि प्राच्यपाश्चात्त्ययोः प्रतिविभागतोऽप्यनुरोधपत्रशतानि। अस्मात् कालात् १८९८ ख्रीष्टाब्दीय-जानुयारी-मासपर्यन्तं स्वामिमहोदयो वात्या-वेगेनेवोत्तर-भारतस्य विभिन्नस्थानानि परिबभ्राम। सर्वत्र श्रीगुरोर्वाणीं प्रचारयामास च। पाञ्जाब-काश्मीर-खेतडी-योधपुर-प्रभृति-स्थानेषु सहस्र-सहस्र-जनास्तस्य वज्रदृप्तवाणी-श्रवणार्थमधीराकुलाग्रहेण समुपस्थिता बभूवुः। न केवलं राजन्यवर्गस्य परन्तु साधारणजनस्यापि निकटसंस्पर्शं संलभ्य सर्वस्तरीय-जनेषु देशसमस्यानिराकरण-सम्पर्कि-मतानि स्वामिमहोदयः प्रचारयामास।

तस्यास्मिन्नैतिहासिक-परिभ्रमणकाले स सनातन-भारतवर्षस्य पूर्व-गौरवकथां तारस्वरेण समुद्घोषयामास। स्वामिमहोदयः सर्वान् ज्ञापयामास यद्भारतवर्षादेव पूर्वेषु युगेषु आध्यात्मजीवन-भावतरङ्गा दिग्-दिगन्तान् विप्लावयामासुर्वरित्र्याः। पिथागोरास्-सक्रेटिस्-प्लेटो-दार्शनिक-चिन्ताधारासु स्पेनजार्मानी-प्रभृति-योरोपीय-विभिन्नराष्ट्राणां सांस्कृतिकजीवनेतिहासेषु च तेषां तरङ्गाणां दीप्तस्वाक्षरमद्यापि परि-

दृश्यते । तथा सोपेनहाओयार्-क्यान्ट्-म्याक्स्मुलार्-पल्डयसेन्-प्रभृत्याधुनिकयुग-प्रख्यातानामियोरोपीय-चिन्तानायकानां चिन्ताधारासु भारतीयचिन्ताप्रभावः सुप्रकट इति स्वामिमहोदयः समुद्घोषयत् । दृढ-कण्ठं स पुनरप्युवाच यन् मृतकल्पमानवसमाज-संजीवनाय याऽमृतवाणी एकान्तापेक्षिता, सा संलभ्या केवलं भारत एव ।

स्वामिमहोदय उत्तरभारतस्य सर्वत्र जनान् प्रत्याययितुं यतते स्म यद् युगयुगान्तरेषु वेदोपनिषद्गीता-प्रभृति-शास्त्रग्रन्थैर्यां शाश्वतवाणीं प्राचीनर्षयः प्रचारयामासुः वस्तुतः सैव भारतीय-जीवनस्य केवला भित्तिः। द्विधाहीनकण्ठेन देशवासिनः सावधानान् कृत्वा स्वामि-महोदयो बभाषे यत् कुसंस्कार-कदाचार-परिपूर्ण-धर्मजीवनानुसरणेन भारतीय-जनानां मुक्तिर्न कदापि भविष्यति । यावत्कालपर्यन्तं भारतवासिनः सर्वे चारित्र्यपावित्र्ययुताः साहसशक्त्यात्म-विश्वास-परिपूर्णा न जायन्ते, तावत्कालपर्यन्तं जातीयविमुक्तिः सुदूरपराहतैव ।

अस्मिन् परिभ्रमणकाले स्वामिमहाराजः काश्मीरमहाराजस्या-मन्त्रणक्रमेण काश्मीरं ययौ । अत्रापि श्रीविवेकानन्दः कतिपयासु जनसभासु जातीयोन्नति-विषयकालोचनानि कृतवान् । काश्मीर-सर्वकारस्योच्चपदस्थः कर्मचारी महेशचन्द्र-भट्टाचार्य-महाशयः स्वामि-महोदयस्य घनिष्ठस्पर्शं प्राप । स्वामिमहाराजः काश्मीरे मठ-संस्था-पनायेयेष । लाहोरेऽवस्थानसमये लाहोर-महाविद्यालयस्य गणिता-ध्यापकेन तीर्थराम-गोस्वामिना स्वामिमहोदयस्य साक्षात्कारः समजनि । तस्य प्रयत्नक्रमेण स्वामिमहाराजः लाहोर-महाविद्यालयच्छात्रगोष्ठ्यां भाषणं ददौ । अध्यापक-महोदय उच्छ्वसितानन्देन स्वामिमहोदयाय सुवर्ण-घटिकायन्त्रमेकं ददौ । स्वामिमहाराजस्तद् गृहीत्वा तत्क्षणा-त्तीर्थरामस्य वस्त्रावरणकोषे संरक्ष्य प्राह—"बन्धो ! त्वया सहैतत् स्थास्यति ; किन्तु व्यवहारो भविष्यति ममैव ।" अत्यल्पकालमध्ये तीर्थरामो गृहं परित्यज्य रामतीर्थनाम्ना सुपरिचितो बभूव ।

काश्मीरं भ्रमित्वा(१) स्वामिमहाराजो जगाम लाहोर-नगरम्।(२) लाहोर-नगरे स्वामिमहोदयस्य बाल्यबन्धुना मतिलालवसु-महोदयेन (३) सह साक्षात्कारोऽभूत्। बाल्ये वयसि एतौ द्वौ समे व्यायामागारे शारीरचर्चारतौ बभूवतुः। अद्य विश्वविजयिनं बाल्यबन्धुं दृष्ट्वा तस्य भावनाऽजायत कीदृशोपायेन स्वामिमहोदयस्तेनाभ्यर्थनीय इति। परम-सङ्कोचभाग् मतिबाबुः प्राह—"भ्रातः! केन नाम्ना त्वामाह्वयामि ?" स्वामिमहोदयः परम-स्नेहार्द्रकण्ठेन प्राह—"भ्रातर्मते! अपि त्व-मुन्मत्तोऽसि ? कोऽहं भो नवीनोऽस्मि जातः ? अहं यथा स नरेन्द्र-स्तथा त्वमपि स एव मतिः।" स्वामिमहाराजस्यामृतभाषणेन मतिलाल-महोदयस्य सर्वसङ्कोचो दूरमयासीत् (४)।

विश्ववरेण्यः स्वामिविवेकानन्दस्तस्य विश्वव्यापि-प्रतिपत्ति-सत्त्वेऽपि क्षोदिष्ठमपि भक्तमनुगामिनं वा न विसस्मार। आलोयार-वास-समये एकदा अभिनन्दनदानरत-विशिष्ट-जनगण-परिवृतः स्वामी दूरे दण्डाय-मानं तस्य दीनहीन-शिष्यमेकमपश्यत्। नामासीत्तस्य रामस्नेहीति।

---

१) काश्मीर-राजधानी-श्रीनगरे स्वामिमहोदयः प्रधानविचारपति-ऋषिवर-मुखोपाध्याय-महाशयस्य भवने आतिथ्यं स्वीचकार। अत्रापि बहवः काश्मीर-निवासि-पण्डितास्तेन सह नित्यं शास्त्रचर्चां चक्रुः।

२) अत्र बहवो गण्य-मान्यजनाः स्वामिसकाशे गुप्तभावेन ध्यानधारणा-तपस्यादिषु शिक्षां लेभिरे। पुनर्लाहोर-नगरे शिख-सम्प्रदायस्य "शुद्धिसभा"-कार्यादिकं दृष्ट्वा स्वामिमहोदयः परमं हर्षमवाप।

३) मतिलाल-वसुः—"ग्रेट्-इण्डियान्सार्कास्" इति संस्थायाः स्वत्वाधिकारी।

४) लाहोर-नगरात् स्वामिमहाराजो भग्नस्वास्थ्यो देरादुनस्थानमगमत्। अत्र स्वामिमहाराजः शिष्यान् रामानुजकृतं ब्रह्मसूत्रभाष्यं पाठयामास। संस्कृत-भाषायामशेष-पारदर्शी स्वामी श्रीअच्युतानन्द-महाराजः स्वामि-महाराजेच्छया सांख्यदर्शनं पाठयामास।

झटिति स्वामिमहाराजस्तं जनसमागमं परित्यज्य, अभ्यर्थनां पूर्णतया विस्मृत्य-चापार-स्नेहेन तं शिष्यमन्तिके आह्वयामास, चिरान्तरङ्ग इव तेन सह कथोपकथनमारेभे च। एतेन स्वामिमहाराजस्य शिष्यप्रीतिर्बाल-सुलभ-सारल्यं च सूच्येते।

विलायतगमनात् प्राग् आलोयारागतेन स्वामिमहोदयेन कस्याश्चन भक्तिप्राणाया नार्या अतिथिसत्कारः परिगृहीत आसीत्। साम्प्रतं तत्र पुनरागतस्य तस्य सा स्मृतिर्नासीद्विलुप्ता। एकदा सशिष्यः स्वामि-महाराजः स्वयं याचमानस्तस्या आतिथ्यं पुनर्जग्राह। सा नारी प्राह—"दरिद्राऽहं, इच्छावत्यपि कुत्राहं त्वद्‌योग्यं मिष्टद्रव्यं प्राप्नुयां तात ?" स्वामिमहोदयः प्राह, "मातः! मिष्टद्रव्यैः किं प्रयोजनम्? तन्निर्मित-"चापाटि"-खण्डवत् मिष्टं खाद्यं नाहं भूतले कदाप्यास्वादितवान्।"

आलोयारराज्यतः स्वामिमहाराजो (१) जयपुरमतिक्रम्य खेतड़ीं जगाम (२)। खेतड़ीमहाराजो गुरुं षोडशोपचारैः पूजयामास, ददौ चातुलनीयमभिनन्दनम्। (३) निरन्तर-वक्तृतादानादिहेतोः स्वामि-

---

१) जयपुरस्थ-खेतड़ीमहाराजभवने स्वामिमहाराजः कथाप्रसङ्गेन प्राह—"अवस्था पूज्यते राजन् न शरीरं शरीरिणाम्"।

२) जयपुरतः पञ्चत्रिंशत्क्रोश-दूरवर्ति राज्यम्। अत्र नटकृष्णः प्राणान् पणान् कृत्वा स्वामिमहाराजं तस्य शिष्यांश्च तोषयामास।

३) डिसेम्बर-मासस्यैकादशदिवसे स्थानीय-विद्यालये पारितोषिक-वितरणोत्सवे भाषणमुखेन स्वामिमहोदयः प्राह—प्राच्यस्य शिक्षाविषयस्त्यागः, प्रतीच्यस्य पुनर्भोगः। शिक्षाया वास्तविकोऽर्थः—मानुषान्तर्निहित-देवत्वस्य विकाश-सम्पादनम्।

खेतडीपरित्यागकाले त्रिंशत्सहस्रमुद्राः स्वामिमहोदयाय ददौ खेतडीराजः, स्वामिमहाराजश्च ताः स्वामिसदानन्दाय स्वामि-सच्चिदानन्दाय च संप्रेषयामास।

महाराजः पुनरपि श्रान्तो जातः। तथापि (१) किषेणगड-आजमीढ-योधपुर-प्रभृतिस्थानानि (२) भ्रमित्वा इन्दोरान्तर्गत(३)-खाराडोयात एव कलिकातां प्रत्याजगाम—१८९८ खीष्टाब्दस्य जानुयारी-मासस्य मध्यभागे।*

---

१) जयपुर-परित्यागकाले स्वामिमहोदयो ब्रह्मचारि-कृष्णलालं विना अन्यान् सर्वान् शिष्यान् वेलुड़-मठं संप्रेषयामास।

२) योधपुरे स्वामिमहाराजः प्रधानामात्य-राज-स्यार्-प्रतापसिंहमहोदय-स्यातिथ्यं स्वीचकार।

३) अस्मिन् स्थाने हरिदास-चट्टोपाध्यायः स्वामिमहाराजस्य शिष्यत्वं प्रार्थयामास। किन्तु स नास्मिन् विषये सफलकामो बभूव। परन्तु स्वामि-महाराजस्तं प्राह—"नाहम् अनुगामि (चेला)-दलवर्धनं काङ्क्षामि। न वा वाञ्छामि गुरु-पदम्। गुरुपदाभिमानिभिर्देशस्य किमपि शुभं न संसाध्यते।"

*पाञ्जाव-काश्मीर-राजपुताना-भ्रमणकाले स्वामिमहाराजो यानुपदेशान् देशवासिभ्योऽदात् तेषां सारसङ्कलनमत्र क्रियते—

१) आन्तर्जातिक-विवाहप्रथा-प्रचलनक्रमेण जातिभेदस्योच्छेदसाधनम्।

२) एकाधिक-विवाहनिवारणम्। अहो दुःखं भारतीय-भिक्षुकोऽपि विवाहितः सन् न्यूनकल्पेन दशसंख्यक-भिक्षुक-प्रवृद्धिविषये सदा व्यग्रो दृश्यते। ततः स्वामिमहोदयोऽविवाहित-संख्यावृद्धिं कामयामास।

३) धनि-दरिद्रयोर्वैषम्यापसारणम्। साधारणजनेषु शिक्षाविस्तारः। दार्शनिक-कूटतर्कः पश्चादास्तां, प्राथम्येन साधारण-जनावस्थोन्नति-साधनम्।

४) सुविवेचनया संस्कृत-विद्या-विस्तारः तेन समाज-निम्नस्तर-स्थित-जातिसमूहस्य संस्कारः परिमार्जितो भवेत्। किन्तु स्वामिमहाराज उच्चवर्ण-विरुद्धान्दोलनं तेषां निन्दा-ग्लानि-प्रचारं वा सर्वदा वारयति स्म; यतस्त एव विद्यामिमां रक्षितवन्तः, तेषां साहायकं विना इदानीं संस्कृत-विद्याया अस्तित्वमपि विपन्नं स्यात्।

प्राच्य-प्रतीच्य-शिष्याणां शिक्षा

१८९८ खीष्टाब्दस्य जानुयारीमासि इंलगड-देशाद् भारतवर्षं समाजग्मतुश्छिन्न-पाश्चात्त्यदेश-सर्वबन्धने मिस् मुलार (*Miss Henrietta F. Muller*)-महोदया तथा च मिस् मार्गारेट् नोवल् ( भगिनी निवेदिता )। भूयश्च फेब्रुयारी-मासि समाजग्मतुरामेरिकादेशतः मिसार्स-ओलिवुल्महोदया तथा च मिस् जोशोफिन् म्याकलयेड् ( *Miss Josephine Macleod* )। तासामागमनोद्देश्यं तु—गुरुदेव-स्वामिमहाराजस्य सान्निध्यलाभः, स्वामिमहोदयस्य सर्वकर्मसु सहायता-विधानं, भारतवर्षविषयक-सर्वविध-ज्ञानाहरणञ्च।

१८९७खीष्टाब्दीय-भूमिकम्पहेतोरालमवाजारस्थ-मठ आसीद्विशेषेण विध्वस्तः। तत एव विशेषेण स्वामिमहाराजो वेलूडग्रामस्थ-नीलाम्बर-मुखोपाध्यायस्योद्यानवाटिकां भाटकेन संगृह्य मठकार्यं तत्रैव परिचालयामास। रामकृष्णसङ्घस्य स्थायिमठनिर्माणार्थं स्वामिमहाराजस्तस्या उद्यानवाटिकाया उत्तरांशस्थितां भूमिं क्रेतुमभिललाप। स्वामिमहोदय-शिष्याया मिस् हेनूरियेटा-मुलार-महोदयायास्तथा मिसेस् ओलिवुल्-महोदयायाश्चोदारसाहायकेन एकोनचत्वारिंशत्सहस्र-मुद्राव्ययेन भूमि-

---

५) येनोपायेन देशेऽस्माकं दृढबुद्ध्युच्चचिन्ताशील-जनविशेषाणां समुद्भवो घटेत, तस्योपायस्य प्रवर्तनं, पुनः स्वीय-विश्वविद्यालयस्थापनम्। स्वामि-महोदयः सर्वदाऽकथयत्—"वयं तादृश-विश्वविद्यालयानां स्रष्टारो भविष्यामो येषु छात्राः शिक्षकाश्च सममध्युष्य श्रेष्ठ-जीवनानामधिकारिणो भविष्यन्ति।

६) लोकचरित्रोत्कर्ष-साधनं तथा विधातव्यं यथा मानवा गृहाणा-मन्तर्बहिश्च सर्वत्र सर्वेषां विश्वासभाजनानि भवेयुः।

७) मतद्वैध-सत्त्वेऽपि सर्वेषां सङ्घबद्धता मैत्री संहतिश्चावश्यं काम्याः—येन देशस्य समग्रा शक्तिरेकत्र समन्विता भवति।

८) पाश्चात्त्य-देशेषु हिन्दुधर्म-दर्शनयोः प्रचारः; तद्विनिमयेन व्यावहारिक-विद्याशिक्षार्थं बहूनां शिक्षित-युवकानां तत्तद्देशेषु प्रेरणम्।

रासीत् क्रीता ; तत्र भवन-निर्माणश्चाचिरेणासीत् प्रारब्धम् । (१)

स्वामिमहाराजोऽन्तरान्तरा नवनिर्मित-मठस्थानमागत्य ताः सर्वाः पाश्चात्त्यशिष्या भारतवर्षीय-धर्मदर्शनेतिहास-समाज-जीवनादिविषयान् शिक्षयामास। भारतवर्षीय-धर्म-जीवन-संस्कृति-प्रभृतिविषये आसां सुष्ठु धारणाः सन्त्विति आसीत् स्वामिमहाराजस्य विशेषाशयः। (२)

१) The monastery, when completed, together with its endowment trust, represented more than one hundred thousand rupees."

२) वर्षेऽस्मिन् शिवरात्रि-पूजादिवसे दिग्दिगन्तरादागतान् गुरुभ्रातॄन् सर्वानाहूय स्वामिमहाराजोऽभिनन्दयामास। ते च सर्वे प्रत्युत्तराणि ददुः। स्वामिमहाराजो रामकृष्णसङ्घस्य भविष्य-कर्मपद्धति-विषये विशेषेण सर्वेषां दृष्टिमाचकर्ष।

भूयोऽपि वर्षेस्मिन् शिवरात्रेः केवलं दिवसत्रयात् पश्चात्, स्वामिमहोदयो गुरु-श्रीरामकृष्णपरमहंसदेवस्य शुभे जन्मदिवसे स्वब्राह्मणशिष्य-श्रीशरच्चन्द्र-चक्रवर्ति-साहायकेन श्रीरामकृष्णस्य स्वस्य च क्षत्रिय-वैश्य-जात्यन्तर्गत-शिष्याणामुपनयनं विदधे। उपस्थितान् सर्वान् संबोध्य स प्राह—भ्रातरः प्रियशिष्याश्च ! सर्वे यूयं शृणुत—गुरुदेवोऽस्माकं जगति सर्वेषां पूर्णसमुद्धरणाय जन्म लेभे। किन्त्विदानीम्—

सर्वोऽपि धर्मध्वजिकोऽद्य देशः
स्पर्शाक्षमाश्चात्र हि सर्व-लोकाः।
वैदान्तिका वा न च हिन्दवो वा
जाता वयं किञ्चिदपूर्व-सत्त्वम् ॥१३४



अपिच— देवालयत्वं समगान्महानसं
पाकस्य पात्रं समुपास्य—देवता।
मन्त्रश्च "मा मां स्पृशते"ति भारती
संस्कार एव प्रथतेऽत्र गर्हितः ॥१३५

भारतस्यातीतेतिहास-वर्णनक्रमेण स्वामिमहाराजस्ताभ्यो भारतवर्षस्य दुर्दशावलीमप्यवर्णयत्। गुरुः शिष्यकुलसकाशे प्रमाणीकरोति स्म यच्छतशतशताब्दीनां जटिलतम-दीर्घतमेतिहासक्रम-परिणति-फलेन मानवजीवन-सम्पर्कितानि श्रेष्ठानि सत्यानि भारतवर्ष एवात्मप्रकाशं लेभिरे। स्वामिमहोदयस्य गभीरहृदयानुरागेण विश्लेषणशक्तिमहिम्ना च सनातनधर्मस्य सत्यत्वं शिष्यशिष्यासु सुपरिस्फुटं बभूव। एवं स्वामिमहोदय-सकाशात् शिक्षामाप्तास्ते वस्तुतो हिन्दुधर्म-वार्तावहरूपेण परिणताः परिगणिताश्चासन्।

आसु शिष्यशिष्यासु मिस्-मार्गारेट्-नोवल् आसीदन्यतमा। सैव भारतीय-नारीसमाजस्य परमहिताय शिक्षाविस्तारार्थं विशेषेण स्वामिमहोदयेन नियुक्ता बभूव। १८९८ खीष्टाब्दीय-मार्चमासस्यैका-

ततो भगवतो गुरुदेवस्य जन्मदिवसे क्षत्रिय-वैश्याः सर्वे रामकृष्णसङ्घभ्रातरो भवन्तु ब्राह्मणत्वाय बद्धपरिकराः।

ततो गुरुभ्रातरः स्वामिमहाराजस्य तत् शिवरूपं सत्यं शिवाकारेण परिणतं द्रष्टुमैच्छन्। स्वामिमहोदयश्च परमशुभे दिवसेऽस्मिन् श्रीरामस्तुतिं जगौ। ततो विवेकानन्दो भैरव-संज्ञया भूपितस्य गिरिशघोष-महोदयस्यापि गात्रं भस्माच्छादितं विधाय शिवसन्निभ-सज्जमकरोत्; अस्मै काषायवस्त्रञ्चादात्। गिरिशोऽप्यविरलधारमश्रूणि निषिञ्चन् अतिकष्टेनोवाच—

पुण्यप्रधानं करुणानिधानं<br>
गुरुं तमुद्दिश्य किमेष वच्मि।<br>
यदाशिषाऽऽबाल्यविरागवद्भिः<br>
समासनेऽद्योपविशामि मूढः॥ १३६

(१) पाश्चात्यदेशगमनस्य कियत्कालात् प्रागेव स्वामिमहाराजो वराहनगरस्थितश्चकार भविष्यद्वाणीम्—"मन्येऽस्माकं स्थायिमठगृहं निर्मितं भविष्यति गङ्गाया अपरपार एव"। सत्यद्रष्टुरृषेर्वाणी सार्थकीबभूव। पाश्चात्यदेशसमागताः स्वामिमहोदय-शिष्य-शिष्या अस्मिन्नेव स्थाने ऊषुः।

दशे दिवसे 'ष्टार-थियेटार'-भवनानुष्ठितसभायां, स्वामिमहोदयस्तस्याः परिचयं साधारणजनेषूद्घोषयामास। ततः कतिपयदिवसेषु सा उन्नतिसोपानपरम्परारूढा समुत्फुल्लहृदयेन गुरुदेवेन दीक्षां ग्राहिता। गुरुदत्तं नाम तस्या अभून्निवेदितेति। निवेदिता सत्यं बभूव भारत-कल्याणसाधनाय गुरुसेवायै च पूर्णतया निवेदिता।

मठनिर्माण-परिचालना - शिष्यशिष्याशिक्षणादिव्यापारैर्नित्यश्रान्तः स्वामिमहोदयः पुनरप्यस्वस्थतामभजत। ततः स्वामिमहाराजो भक्त-शिष्यैर्हिमालयस्थ-दार्जिलिं-मण्डले मार्च-मासस्य त्रिंशदिवसे संप्रस्थित आसीद्वायुपरिवर्तनाय। किन्तु तस्य विश्रामलाभो नासीद्भगवता निर्दिष्टः। सहसा संवादो लब्धो यत् कलिकातानगर्यां 'प्लेग्'-रोगस्य प्रकोपो विषमो जात इति। तत्क्षणाद् गुरुदेवः कलि-कातायां प्रत्याववृते। अस्मिन् महाविपत्पाते श्रीविवेकानन्द-नायक-महितः श्रीरामकृष्णसङ्घो महति सेवाकार्ये आत्मनियोगं चक्रे। प्रचु-रोऽर्थोऽस्य कृत आसीत् प्रयोजनीयः। कश्चन गुरुभ्राता प्राह— कुतो लप्स्यते एषोऽर्थः प्रभूतः? स्वामिमहोदयस्तत्क्षणादुत्तरं ददौ— "कथम्? प्रयोजने सति विक्रेष्यामि मठनिर्माणार्थं संगृहीतां नवीनां भूमिम्। यदि जनानां सहस्राणि मृत्युकवलग्रस्तानि भवेयुः, किं प्रयोजनमस्माकं मठभवनेन? संन्यासिनो वयं—पूर्ववत् तरुतले निवत्स्यामः भिक्षान्नेनोदरपूर्तिं च करिष्यामः॥" (१)

(१) अहो आनन्दस्य विषयो यद् मठभूमि-विक्रयस्य प्रयोजनं न बभूव। दिग्दिन्तेभ्यो बहुशोऽर्थसाहायकानि संलब्धानि। जातिवर्णनिर्विशेषं सहायता-दानेन श्रीरामकृष्णसङ्घोऽपूर्वं दृष्टान्तं जनसेवायाः स्थापयामास। दरिद्र-नारायणसेवायां च तस्येदृगात्मत्यागं वीक्ष्य स्वामिमहाराजस्य विरुद्धवादिनो-ऽपि स्तब्धवाचो बभूवुः, तेऽप्यजानन् यत् स्वामिमहोदयस्य वेदान्तप्रचारो न मौखिकव्यापारमात्रेण पर्यवसितः, कार्येणापि वैदान्तिकोऽसाविति। "यत्र जीवस्तत्र शिव" इति मन्त्रस्योद्गाता, "दरिद्रदेवो भव"इति मन्त्रस्य द्रष्टा

स्वामिमहाराजस्यालमोडा-काश्मीर-भ्रमणम्

भारतवर्षभ्रमणानन्तरं सेभियार्-दम्पती आलमोडायाम् ऊषतुः। तौ बहुधा स्वामिमहोदयं तत्र नेतुमैच्छतां; किन्तु नानाकार्यवशात् स्वामिमहोदयस्तत्र गन्तुं न शशाक। अथ बहुधानुरुद्धः स्वामिमहाराजः मे-मासस्य एकादशदिवसे निवेदितया सह आलमोडागमनाय कलिकातां तत्याज (१)।

आलमोडावस्थानकाले जुनमासस्य पञ्चमे दिवसे रविवासरे स्वामिमहाराजो दारुणं वार्ताद्वयं प्राप। एकतो विख्यात-साधु-'पाओहारीबाबा'-महाराजस्य महातिरोधानमन्यतश्च प्रियशिष्यस्य गुड्उइन्-महोदयस्य देहावसानम्। "पाओहारीबाबा"-महाराजस्य स्थानं श्रीरामकृष्णपरमहंसदेवात् किञ्चिन्न्यूनमिति स्वामिमहोदयस्य मतमासीत् (२)।

---

विश्वजयी विवेकानन्दः व्याधितजनानां हितसाधनाय नितान्तमसुस्थोऽपि मृत्युं तुच्छीकृत्य कलिकाताराजमार्गे दण्डायमानो बभूव, नारायण-बोधेन मानवसेवाया ऐतिहासिकं दृष्टान्तमेकं संस्थापयामास च।

१) हिमालयस्य प्रत्यन्तभागे शान्तेऽस्मिन् परिवेशे भगिन्या निवेदिताया जीवने आमूलं परिवर्तनं समघटत। श्रीगुरोरमोघाशीर्वलेन निवेदिता तस्या आजन्मपोषित-संस्कारान् परित्यक्तुं समर्था बभूव।

आलमोड़ायां स्वामिमहाराजो निर्जनताप्रियो बभूव। जनतया सह साक्षात्कारादिविषयेऽपि पराङ्मुखो जातः। गभीरारण्यं गत्वा एकाकी निर्जनस्थाने घटिकासप्तकं घटिकाष्टकं वा ध्यानेन यापयामास। सर्वदाऽदृश्यत तस्य कश्चनात्मसमाहितो भावः।

(२) शोकसंवादप्राप्तेः प्रथमदिवसे न कोऽपि दुःसंवादमेतं स्वामिमहोदयाय विज्ञापयितुं साहसी बभूव। द्वितीयदिने स्वामिमहाजो विज्ञापितः, स कठोरसंयमेन शोकशल्यं सेहे। एकदा स्वामिमहाराज उवाच—"श्रीरामकृष्णदेवो बहिर्भक्तिमयोऽपि अन्तः प्रभूतज्ञानमय आसीत्; किन्तु अहमस्मि तस्य विपरीतः। तथा च बाह्यतो ज्ञानभावावलम्बी; किन्तु अन्तरतीव

गुड्उइन्-महोदयो "माद्राज्मेइल्"-पत्रिकायां कार्यकाले रक्तातिसार-रोगग्रस्त उत्कामुराडं गतवान्; तत्र च शेषनिःश्वासं तत्याज (१)।

गुड्उइन-विषये स्वामिमहाराजो लिलेख—"गुड्उइन-सकाशे कृत-मस्मदृणमपरिशोधनीयम्। यदि केऽपि मन्येरन् मम चिन्तया तेषामुपकारः कोऽपि सञ्जातस्तर्हि ते जानीयुर्मम प्रत्येकं कथा श्रीमतो गुड्उइनस्य स्वार्थ-लेशहीनाक्लान्तपरिश्रमहेतोः प्राकाश्यं नीता। तस्य मरणेन व्यवधापितो-ऽस्म्यहम् अकपटबन्धुतः, भक्तिमतः शिष्यात्, अद्भुतात् कर्मिणश्च। क्लान्ति-नाम्नीं कामपि न सोऽजानात्। परार्थाय ये जीवन्ति, तेषां संख्या जगति स्वल्पैव। तस्याः संख्यायाः पुनरद्य एकेन लाघवं जातम्।"

ममत्वपूर्णः। दुःसंवादप्राप्तेः कतिपयघटिकाभ्यः पश्चात् स्वामिमहाराजः प्राह—"ममास्ते महती काचिद् दुर्बलता—गुड्उइनमूर्तिः केवलं मनसि पदं लभते। नैतत् सुष्ठु। अगौरवमेतद्ध्रुवं मानवस्य यन्मत्स्य-कुक्कुर-स्वभाव-त्यागा-पारगत्वं तथा स्मृतेर्दासत्वमपि। एषा भ्रान्तिर्मानवैर्निश्चितं दूरेऽपसारणीया; नरा जानीयुः, मृता अपि पूर्ववद् अस्माभिः सार्धं यान्त्यायान्ति च, न ते दूरं गताः। ते न विद्यन्ते, तैः सह विच्छेदो जातः—ईदृशी भावना भ्रान्ति-मूलिका। सेयं कल्पना"। पुनरपि प्राह—"कस्यचनेच्छया जगद्व्यापारः परिचाल्यत इतीदृशी भावना सर्वानर्थस्य मूलं कारणम्। व्यक्तिविशेषो-ऽत्रापराध्यतीति यदि सत्यं भवेत्, भवतु वेश्वरः—कामं स निहन्तव्यः। अहो! यदि गुड उइन्-महोदयो मेऽजीविष्यत्, कति वा नोपकारान् जगतो व्यधास्यत्। समयेऽस्मिन् स्वामिमहाराजः पद्यमेकं लिखित्वा गुडउइन्-महोदयस्य मातृ-समीपे सम्प्रैषयत्—पद्यस्य नाम "अस्तु तस्य परा शान्तिः।" इति (१)।

---

(१) श्रीप्रमथनाथवसु-महोदयस्य "स्वामि विवेकानन्द"नामक-ग्रन्थस्य ७६२ पृष्ठं द्रष्टव्यम्।

(१) Requiescat in Pace or May he rest in peace. Written in memoriam to J. J. Goodwin, August, 1898. See p. 45 of the Vira-Vani, published by Vivekananda Society, Calcutta, 15th edition.

अतः परं जनसङ्गः स्वामिसकाशे दुःसह इवाजायत। आलमोड़ा-त्यागायापि तस्याधीरता सुप्रकटासीत्। एतावत्कालपर्यन्तं "राजाम् आयार"-नामकेन केनचित् शक्तिशालिना माद्राजीय-युवकेन "प्रबुद्धभारत"-नाम्नी पत्रिका स्वामिभावप्रचारहेतोः माद्राजस्थ-शिष्याणामर्थसाहाय्येन परिचाल्यते स्म। किन्तु साम्प्रतं सम्पादकस्य "आयार"स्य परलोकगमनहेतोः पत्रिका-परिचालना स्थगिताऽऽसीत्। स्वामिमहोदयस्यास्यां पत्रिकायां प्रीतिरासीत् महती ; ततोऽस्य लोपात् स्वामिमहोदयस्य महत् दुःख-मुदपद्यत। स्वामिमहोदयस्य प्रीति-संपादनार्थं सेभियार्-महोदय-स्तस्याः परिचालना-व्ययभारमगृह्णात् ; पुनः स कार्याध्यक्षश्चाभवत्। एतेन परमतुष्टः स्वामिमहाराजो जुन्-मासस्य एकादशदिवसे काश्मीराय प्रतस्थे। तस्मात् स्थानादेव स्वामिमहाराजः "प्रबुद्धभारत"स्य प्रथमसंख्यायामेव प्रकाशनार्थं "प्रबुद्ध-भारतं प्रति" इतिनामकं पद्यमेकं प्रेषयामास (१)। तच्चेत्थम्—

प्रबुद्ध-भारतं प्रति

भूयोऽपि जागृहि न मृत्युरियं हि निद्रा
सञ्चारणाय हृदये नवजीवनस्य ।
ध्यानार्थिनेऽधिकतरोन्नत-लक्ष्यभाजे
विश्राममर्पयितुमब्जदृशोर्युगाय ।
हे सत्य ! पश्य ननु विश्वजनो भवन्तम्
आस्ते प्रतीक्ष्य ; न हि तेऽस्ति कदापि मृत्युः ॥ १३७

* * * * *

भाषस्व विश्वम्—अथ न स्वपनं शुभं ते
उत्तिष्ठ जागृहि धृतं स्वपनेन विश्वम् ।

---

(१) *To the Awakened India. Written in August, 1898, on the occasion of the transfer of the office of the magazine "Prabu-ddha Bharat" from Madras to Almora.*

उत्सूत्रमाल्यमिह सीव्यति कर्म नित्वम्
उच्चावचैर्हि कुसुमैर्वत भावनायाः—॥१३८
गर्भेऽसतः समुदितैरपमूलवृन्तैः ।
श्वासानिलेन लघुनापि लयं प्रयान्ति
सत्यस्य तानि वितते वत तत्र शून्ये
सृष्टेर्यदादि-समयेऽलभतात्म-सत्ताम् ॥१३९
भीमुकमेधि भयहीनतया च तिष्ठ
सत्याग्रहं कुरु समाश्रय सत्यभावम् ।
एकात्मकत्वमुपयाहि मिलत् ऋतेन
स्वप्नो मृषा विलयमेतु च कर्मजन्यः ॥१४०
प्रारिप्ससे यदि पुनः स्वपनसत्र लीलां
तां पश्य सत्यविषये गतिरस्ति यस्याः ।
निष्कामकर्मविषयं स्वपनं तवास्तां
प्रेमापि सीमरहितो भवतु त्वदीयः ॥१४१

अत्र स्वामिमहोदयस्यालमोड़ावस्थानकाले पूर्ववङ्गीय-वरिशालमण्डलस्थ-भक्तजननायकेन अश्विनीकुमार-दत्त-महोदयेन सह साक्षात्कार-विवरणमवश्यमेव समुल्लेखनीयम्—व्यक्तिगौरवात्, विषयवस्तुगौरवाच्च ।

अश्विनीकुमारदत्तमहोदयो महता कौतूहलेन श्रद्धा-स्नेह-परवशतया च स्वामिमहोदयस्य अवस्थानस्थाने समागत्य कञ्चन तरुण-सन्न्यासिनं प्राह, "कुत्र नरेन्द्रनाथ" इति । स च तरुण-सन्न्यासी प्राह—"मृतो नरेन्द्रनाथः ; वसत्यत्र श्रीविवेकानन्द" इति । उभयोरालपनं श्रुत्वा कौतूहल-परायणः स्वामिमहाराजो बहिरागत्य श्रीअश्विनीदत्तमहोदयं दृष्ट्वा ससम्भ्रमं मिष्टसम्भाषणादिना तोषयामास । श्रीअश्विनीकुमारदत्त-महाशये "स्वामिमहाराज" इति संभाषमाणे स्वामिमहोदयः प्राह—"अहं स एव नरेन्द्रनाथो रामकृष्णस्य" इति । तात्कालिक-कंग्रेसविषये श्रीविवेकानन्दस्य मतं, श्रीअश्विनीदत्त-महोदयस्य भविष्यकर्मपद्धतिविषये उपदेशादिकं च परमसारगर्भम् । स्वामिमहोदयः प्राह—"वङ्गवासितरुणानाम् अस्थिभ्यः संजनिष्यते वज्रं येन भारतवर्षीय-

आलमोड़ातः स्वामिमहाराजः ओलिबुल्-महोदयाया अतिथिरूपेण काश्मीरं प्रतस्थे। वरमूलातो जलमार्गेण सशिष्यः स्वामिमहाराजः "हाउसबोट"-त्रय साहाय्येन श्रीनगरं ययौ। (१)

जुलाइमासस्य चतुर्थदिवसे आमेरिकावासिनामानन्दविधानार्थं स्वामिमहाराजः "जुलाइमासस्य चतुर्थदिवस"-समाख्यं पद्यं विरचयामास (२)।

---

पराधीनता विनाशं यास्यतीति।

"Of the bones of the Bengali Youths shall be made the thunderbolt that shall destroy India's thraldom."

अतः परम् अस्पृश्यता-दूरीकरण-प्रकृष्टसमाज-सेवादिविषये स्वामिमहाराजो दत्तमहोदयेन पर्यालोचनां चकार।

"And go to the untouchables, cobblers, the sweepers, and others of their kind, and tell them, 'You are the soul of the Nation, and in you lies infinite energy which can revolutionize the world. Stand up, shake off your shackles, and the whole world shall wonder at you. Go and found schools among them, and invest them with the sacred thread'." P. 576, Life of Swami Vivekananda, by his Eastern and Western disciples.

१) भ्रमणावसरे स्वामिमहाशयः कदाचन स्वीय-परिव्राजक-जीवनस्य विशिष्टघटनासमूहं कदाचन काश्मीरस्योज्ज्वलातीतेतिहासं शिष्यजनसमक्षं समुपस्थाप्यानन्दोद्वेलितोऽजायत। किन्त्वचिरात् सदाहास्योत्फुल्लो विवेकानन्दः कियत्कालमेकाकी निर्जनवासायाधीरोऽजायत।

२) *American Independence Day. On the 4th July, 1898, the Swamiji composed this poem for the celebration of the day during his stay in Kashmir together with his American disciples headed by Sthira Mata. It is again the date he chose for leaving aside his mortal coil in the year 1902.*

जुलाइमासस्य त्रतुर्थो दिवसः

विलीयते पश्य पुरः सुनील-
पयोदपुञ्जः सुविषादमूर्तिः ।
क्षपान्धकारं प्रविधाय सान्द्रं
धरासु राशीकृत आस यः पुरा ॥१४२

स्पर्शेन तावत्तव मोहनेन
विनिद्रमेतज्जगदस्ति पश्य ।
विहङ्गसङ्घो विदधाति तानं
विनीतनिद्रः प्रतिपादपाग्रम् ॥१४३

दलानि पौष्पाणि समानयन्ति
नीहारभूषं मुकुटं हि तारम् ।
सुस्वागतं तुभ्यममूनि कामं
दोदुल्यमानानि निवेदयन्ति ॥१४४

सरांसि च प्रेमभरेण नेत्रा-
ण्युन्मीलयन्त्यम्बुजनुःशतानि ।
तवैव कर्तुं वरणं यतन्ते
निजाभिरुत्सीम-गभीरताभिः ॥१४५

एहि त्वमालोक-नराधिराज !
त्वदर्थमाह्वानमदोऽन्तरुत्थम् ।
हे सूर्य ! विस्तारयसि त्वमद्य
निर्वाणमुक्तिं प्रतिदिग्विभागम् ॥१४६

आसीद् धरा त्वामनुपालयन्ती
कथञ्च कालान् कति चेति चिन्त ।
तवैव सन्धानकृतेऽनुदेशं
जहुर्ग्रहान् हा कति नानुकालम् ॥१४७

प्रीताः प्रियाणामवधीर्य भेजु-
निर्वासिताः काननमादिमं ते ।
विदारयन्तो जलधिं सुभीमं
पदे पदे जीवन-मृत्युभीताः ॥१४८

अनन्तरं तद्दिनमागतं शुभं
यदा तु सर्वं सफलत्वमागतम् ।
ताः साधना-प्रेम-समर्चन-क्रिया-
स्तदात्मदानश्च यदा त्वमग्रहीः ॥१४९

संपूर्णमासीत् सफलं सुलार्थकं
तदोदतिष्ठस्त्वमपाप शुभ्र ।
आलोकराशिं वितरीतुकामो
विश्वस्य सर्वस्य हि मानवेभ्यः ॥१५०

चल प्रभो त्वं चल तावदेव
तदीय-माध्यन्दिन-तीक्ष्नभाभिः ।
विप्लावितं स्याद् भुवनं न यावत्
न च प्रभा सा निखिले विकीर्णा ॥१५१

न चापि नार्यश्च नराश्च सर्वे
समुन्नमय्य स्वशिरांसि वाढम् ।
छिन्नं प्रपश्यन्ति न श्रृङ्खलं स्वं
न हासवज्जीवनमाप्नुवन्ति ॥१५२

जुलाइमासस्य षड्विंशदिवसे स्वामिहोदयोऽमरनाथ-तीर्थपथे यात्रां प्रारेभे। विशेषानुमतिक्रमेण निवेदिता स्वामिमहोदयेन साकमगच्छत् । तस्य शिष्यगणः स्वामिमहोदयस्य प्रत्यागमनपर्यन्तं "पहेलगाम"-नामक-स्थानेऽपेक्षते स्म ।

दुर्गम-दुरारोह-गिरितीर्थपथे स्वामिमहाराजः साधारणयात्रिवत् सर्वान् नियमान् परिपाल्य श्रद्धावनतचित्तः प्राचलत्, आगष्ट-मासस्य

द्वितीयदिवसे बहुलेप्सितेऽमरनाथक्षेत्रे समाजगाम च। स्नानावसाने विभूतिभूषिताङ्गः कौपीनमात्रवासा विवेकानन्दो भक्तिविप्लुतमानसो गुहां प्रविवेश—ददर्श च पुरतो भगवतोऽनादिलिङ्गस्य श्रीअमरनाथस्य तुषारावृतविग्रहं स्वीये स्थिरमहिम्नि प्रतिष्ठितम्। भूलुण्ठितः स्वामिमहाराजः करद्वयेन विग्रहं स्पृष्ट्वा देवं तुष्टाव—(१)।

**गृहीत-भस्मभूषणं तमोगुणैकपूषणं**
**नमज्जन-प्रमोदनं त्रिताप-मूलशातनम्।**
**दशास्य-दर्प-मोचनं रवीन्दु-वह्नि-लोचनं**
**गिरीन्द्रनन्दिनीधनं भजे विरूपलोचनम्॥ १५३**

अतः परं सेप्टेम्बर-मासस्य त्रिंशदिवसे स्वामिमहाराज एकाकी जगाम क्षीरभवानीदर्शनाय। क्षीरभवानीमन्दिरयात्रायाः प्रागेव स्वामिमहाराजस्य मनो जगज्जननी-श्रीकालिकाचरणयोश्चिराय पूर्णनिवेदितं वस्तुतस्तद्गतमजायत। जगज्जननी-कालिकामूर्तौ कोमल-कठोर-सृष्टि-ध्वंस-भावयोः समन्वयो विवेकानन्दं विशेषेण प्रभावयामास। दुःख-दैन्य-व्याधिप्रभृतिभिः संग्रामे निर्भीकदृढतया युध्यमानस्य मृत्योरालिङ्गनं यथार्थजगज्जननी-पूजनम्। ततो नवयुगप्रारम्भे भारत-महाश्मशानेऽस्मिन्

१) श्रीविवेकानन्दो गुहातो बहिरागच्छन्नेवानन्दोद्वेलकण्ठः प्राह—"साक्षाच्छिवोऽद्य मया दृष्टः। नान्यस्मिन् कुत्रापि तीर्थे ईदृश आनन्दो मया लब्धः।" परवर्तिसमयेऽसौ निवेदितासकाशे प्राह—"देवादिदेवो मह्यमिच्छा-मृत्युं वरं ददौ"। शिवमहिम्-कीर्तनरतोऽसौ स्वामिमहाराज आगष्टमासस्य अष्टमे दिवसे पहेलगाममागत्य पाश्चात्त्य-शिष्याणामानन्दं वर्धयामास।

किन्त्वत्रास्माभिर्विशेषेण वक्तव्यं यच्छिवसान्निध्यमाप्तस्य श्रीविवेकानन्दस्य भावावेग ईदृशं रुद्रवेगं दधार येन तस्य देहस्थित-शिरास्नायुमण्डली विकलाऽजायत। तं भाववेगमुपशमयितुं विशेषशक्तिप्रयोगं कुर्वतः स्वामिमहाराजस्य वामचक्षू रक्तवर्णं दधार, हृत्पिण्डञ्च तस्य चिराय वर्धितायतनमजायत।

अतीत-कङ्कालस्तूपोपरि मृत्युरूपाया जनन्याः पूजनार्थं निर्वीर्यालस-भारतवासिनः स देवः पुनराह्वयामास। कालेऽस्मिन् स्वामिमहाराजस्तस्य जननी काली (*Kali the Mother*) समाख्यांग्लभाषामयं पद्यं रचयासास। तस्यायं संस्कृतमयार्थः—

जननी काली

निर्वाति निःशेषमुडुप्रपञ्चो
मेघोऽपि मेघान्तरमावृणोति।
तमिस्रराजिर्ध्वनति स्फुरन्ती
गर्जत्यहो घूर्णितवायुवेगः ॥१५४

वन्दीगृहाभ्यन्तरतः प्रमत्ताः
प्राणा बहिर्भूय च लक्षलक्षम्।
समूलमुत्पाट्य तरून् प्रयान्ति
फूत्कारवेगेन निरस्य मार्गं ॥१५५

---

*The Stars are blotted out,*
*The clouds are covering clouds,*
*It is darkness, vibrant, sonant,*
*In the roaring, whirling wind.*
*Are the souls of a million lunatics,*
*Just loose from prison-house,*
*Wrenching trees by the roots,*
*Sweeping all from the path ?*
*The sea has joined the fray,*
*And swirls up mountain-waves*
*To reach the pitchy sky—*
*The flash of lurid light*
*Reveals on every side*
*A thousand, thousand shades*
*Of Death, begrimmed and black—*
*Scattering plagues and sorrows,*

युद्धाय संनह्यति वारिराशि-
स्तरङ्ग आक्रामति शैलशृङ्गम् ।
नभस्तलं स्प्रष्टुमना विकाश-
हासं विधत्ते तडिदुग्ररूपा ॥१५६
तया प्रकाशं परितो व्रजन्ति
मृत्यूचितं बिभ्रति कालिमानम् ।
छायाशरीराण्यपि लक्ष-लक्षं
दुःखस्य राशीन् भुवने विकीर्य ॥१५७
नृत्यन्ति तान्युन्मद-ताण्डवेन
समेहि मातर्मम मृत्युरूपे ।
करालि ! नामापि च ते करालं
प्रश्वास-निःश्वासगतश्च मृत्युः ॥१५८
सञ्चारणं ते चरणस्य भीमं
क्षणे क्षणे नाशयति त्रिलोकीम् ।
काली ह्यसि त्वं प्रलयैकरूपा
मातस्त्वमाविर्भव मत्समक्षम् ॥१५९

---

*Dancing mad with joy ;*
*Come, Mother, come !*
*For Terror is thy name !*
*Death is thy breath.*
*And every shaking step*
*Destroys a world for e'er,*
*Thou Time, the all-Destroyer !*
*Come, O Mother, come !*
*Who dares misery love,*
*And hug the form of death,*
*Dance in Destruction's Dance,*
*To him the Mother comes.*

यः साहसेनेच्छति दुःख-दैन्ये
स्वबाहुपाशेन वृणोति मृत्युम् ।
सुखान्वितः पश्यति कालनृत्यं
तत्सन्निधौ गच्छति मातृरूपा ॥१६०

स्वामिमहाराजः क्षीरभवानी-पवित्र-प्रस्रवणतटे उपस्थितो जगज्जननीकृपालाभाय भक्तिगद्गदचित्तेन पूजोपहारं निवेदयामास, कस्यचन स्थानीयब्राह्मणपण्डितस्य कुमारीं शास्त्रविधिना पूजयामास च ।

जनन्या श्रीश्रीक्षीरभवान्या सहोत्तर-प्रत्युत्तरहेतोरिव श्रीविवेकानन्दस्याजायत भावान्तरम् (१) । अतोऽभूतपूर्वनीरवतामवलम्बमानः स्वामिमहाराजः श्रीनगरं प्रत्यावव‍ृते, गम्भीरकण्ठेन शिष्यगणमुद्दिश्य प्राह च—"मम कर्मस्पृहा गता, स्वदेशप्रेम च गतम् । मया सम्यग् बुद्धम्—अहं यन्त्रं, जननी यन्त्रिणी । मातैव सर्वेश्वरेश्वरी, सर्वकर्त्री । कोऽहं, केवलं ज्ञानहीनः सन्तान एव

वेलुड-मठ-प्रतिष्ठा

काश्मीरभ्रमणान्ते स्वामिमहाराजः १८९८-खीष्टाब्दीयाक्टोवरमासस्य अष्टादशदिवसे लाहोरतः स्वामिमहानन्देन सह वेलुडं प्रत्याजगाम । सन्न्यासिब्रह्मचारिणः सर्वे तस्यागमनेन हृष्टा अपि तस्य शरीरावस्थां वीक्ष्य चिन्तान्विता बभूवुः । सर्वदेहेऽपरीसीमक्लान्तिच्छाया, वदनमण्डलं पांशुवर्णं, वामचक्षुषि संहत-शोणित-कलङ्करेखा । चिकित्सका यथायथोपदेशं दत्त्वा गतवन्तः ; किन्तु स्वामिमहाराज आसीत् परमनिर्विकारः । स्वस्थताहीनेऽपि शरीरे कर्मराशेर्नासीदियत्ता काचन ।

वर्षेऽस्मिन् नभेम्बरमासस्य द्वादशे दिवसे परमाराध्या श्रीश्रीमातृदेवी सारदामणिः कतिपय-स्त्रीभक्तैः सह श्यामापूजादिवसे मठार्थं

---

१) अस्य संघटनस्य विशेषज्ञानाय अस्मत्कृतनाटकं "विश्वविवेकम्" द्रष्टव्यं सुधीभिः ।

संगृहीतायां नवभूम्यां शुभपदार्पणं कृतवती। श्रीश्रीजननी स्वयं पूजादिकं समाप्य सन्न्यासिवृन्दम् आशीःपुष्टं चकार। श्रीश्रीजनन्या आगमनेन सर्वे परम-परितुष्टा बभूवुः। तस्मिन्नेव दिवसे श्रीश्रीजननी स्वामिविवेकानन्दस्यानुरोधेन "बागवाजारस्थ—"सिष्टार-निवेदिता-बालिकाविद्यालये" शुभपदार्पणं कृत्वा तस्य विद्यालयस्योद्बोधनं कृतवती। अस्मिन्नुत्सवे स्वामिनौ ब्रह्मानन्द-सारदानन्दौ उपस्थितावास्ताम्।

स्वामिमहाराजो सद्यःसंगृहीतायां भूमौ मठसंस्थापनाय कृतप्रयत्नो बभूव। १८९८ खीष्टाब्दीय-डिसेम्बरमासस्य नवमो दिवसो रामकृष्ण-सङ्घेतिहासे चिरं स्थास्यति सुवर्णाक्षरभास्वरः। प्रातरेव स्वामि-महोदयेन भागीरथीपुण्यसलिले अवगाहनानन्तरं ध्यानोपासनापूजा-होमादिकृत्यानि सर्वाणि पूर्णनिष्ठयाऽनुष्ठितानि। ततः श्रीश्रीठक्कुर-देहावशेषगर्भं पवित्रताम्राधारं स्वस्कन्धे वहन् स नीलाम्बरमुखोपाध्यायो-द्यानवाटिकातो मठभूम्यभिमुखं ययौ। पश्चादाजग्मुर्गुरुभ्रातरो भक्त-शिष्याश्च। शङ्ख-घण्टापवित्रस्वनैर्दश दिश आसन्मुखरिताः। पवित्र-ताम्राधारं यथास्थानं स्थापयामास श्रीस्वामिमहाराजः।

पथि चलन् स्वामिमहाराजः पार्श्ववर्तिनं शिष्यं प्राह—"श्रीठक्कुर एकदा मामवदत्, "यत्रैव स्वस्कन्धोपरि संस्थाप्य त्वं मां नेष्यसि दरिद्र-पर्णकुटीरे वृक्षतले वा—अहं तत्रैव गमिष्यामीति। परमदयालो-राशीर्वादस्योपरि निर्भरशीलोऽहं तत्रभवन्तमस्माकं भविष्यमठं नेष्यामि। वत्स! ध्रुवं जानीहि, यावत्तस्यानुगामिनः पवित्रताम्, आध्यात्मिक-भावनिष्ठतां सर्वमानव-सम्प्रीतेरादर्शं च संरक्ष्य चलिष्यन्ति, तावत् श्रीठक्कुरः स्वोपस्थितिमाहात्म्येन मठमिमं साधु संरक्षिष्यति।" मठ-भूमिं दृष्ट्वा स्वामिमहाराजः प्राह—"ममायमभिप्रायो यदयमेव मठो भविष्यति साधन-भजन-ज्ञानचर्चाकेन्द्रस्थानम्। या शक्तिरस्मात् स्थानादुदेष्यति, सा जगत् सर्वं करिष्यति प्रभावितम्। गतानुगतिकं मानव-जीवन-गतिस्रोतः करिष्यति भिन्नपथगामि खरप्रवाहितं च।

ज्ञान-भक्ति-कर्मयोगसमुच्चयेनास्मात् स्थानात् अत्युदार आदर्शो जन्म लप्स्यते। एतन्मठान्तर्गत-पुरुषेङ्गितेन काले दिग्दिगन्तेषु प्राणानां भविष्यति सञ्चारः, यथार्थधर्मानुरागिणश्च सर्वेऽत्र सम्मिलिता भविष्यन्ति" (१)।

श्रीगुरोरादर्शोपदेशानां सर्वसाधारणेषु प्रचारार्थं कस्याश्चन वङ्ग-भाषामय-पत्रिकायाः प्रकाशनं बहुकालात् स्वामिमहोदयस्याभीप्सित-मासीत्। स्वामिमहाराजस्येच्छाक्रमेण प्रोत्साहबलेन च स्वामि-त्रिगुणातीतानन्दः १८९९ ख्रीष्टाब्दीय-जानुयारी-मासस्य चतुर्दशे दिवसे उद्बोधन-नामक-पाक्षिक-पत्रिकायाः प्रथमां संख्यां प्रकाशयामास। 'उद्बोधन'नाम स्वामिमहोदयस्याभिप्रायेण कृतमासीत्। प्रथमसंख्यायाः प्रस्तावना च स्वामिमहोदयेन लिखिता। मठावस्थानकाले स्वामि-महाराजो नवागतानां शिक्षाभारं स्वयं जग्राह। परं दैनन्दिन-गुरुकार्य-वहनात् स्वामिमहाराजस्य स्वास्थ्यावनतिर्द्रुतं समघटत।

---

१) मठभूमावुपस्थितः स्वामिमहाराजः सयत्न-रचितवेद्या उपरि पवित्र-ताम्राधारं संस्थाप्य सर्वधर्ममूर्तविग्रहस्य श्रीगुरुदेवस्य श्रीश्रीचरणारविन्दयो-र्भूयो भूयः प्रणामपुष्पाञ्जलीन् ददौ। पूजान्ते प्रज्वलिताग्नेः पुरतो युगाचार्य-स्वामि-श्रीविवेकानन्दो बहुयुगविस्मृत-वेदमन्त्रान् समुच्चारयामास समापयामास च 'विरजा'होमादिकम्। अनुष्ठानान्ते आचार्यदेवः सर्वान् आह—"भ्रातरः! वयं कायेन मनसा वाचा च लोककल्याणावतीर्ण-प्रभुसकाशे प्रार्थयामहे—यथा स बहुकालमत्र निवसत्विति। तस्य आशीर्वादेन सूक्ष्मा-वस्थानेन च स्थानमिदं भवतु पुण्यतीर्थम्। अस्मात् कर्मकेन्द्रात् 'बहुजन-सुखाय बहुजनहिताय च' सर्वसम्प्रदायानां सर्वधर्माणां भेदद्वन्द्व—निरसनार्थं च भावधारा प्रचारिता भवतु"।

विवरणप्रपञ्चार्थं स्वामिमहोदयस्यांग्लभाषात्मकं प्राच्य-पाश्चात्त्य-शिष्यरचितं जीवनचरितं द्रष्टव्यम्, पृष्ठं ६०६।

१८९९ ख्रीष्टाब्दीय-जानुयारीमासस्य द्वितीयदिवसाभ्यन्तरे नीलाम्बर-मुखोपाध्याय-महाशयस्योद्यानवाटिकातो वर्तमानमठस्थाने सर्वं वस्तु स्थानान्तरितमासीत्। ॐ

---

ॐ अथ स्वामिमहाराजोऽन्यदपि परिकल्पनं रूपं ग्राहयितुं प्रयेते। तच्च हिमाचल-निर्जन-प्रदेशे मठान्तरस्थापन-रूपम्। यत्र मठे प्राच्य-पाश्चात्त्य-भक्ताः सम्मिलिताः सन्तः परस्परभावविनिमय-माध्यमेन उपकृता आध्यात्मिक-जीवने प्रभूतोन्नतिं लभेरन्निति। अतः १८९९ ख्रीष्टाब्दीय-मार्च-मासस्य ऊनविंश-दिवसे श्रीरामकृष्णस्य पुण्यजन्मदिवसे आलमोड़ातः पञ्चविंशतिक्रोश-दूरवर्तिनि मायावती-नामकस्थाने तुषारमौलि-हिमाचलस्य निर्जनाभ्यन्तरे सङ्कल्पितोऽयं मठोऽद्वैताश्रमनामकः प्रतिष्ठित (१) आसीत्। यथा सर्वधर्माव-लम्बिनः सर्व-मतानुसारिणश्च स्वस्व-धर्ममत-विश्वासानुसारेण अस्मिन् स्थाने ईश्वरभजने समर्था भवेयुः, तदर्थं नात्र काचन मूर्तिः स्थापनीयेति स्वामि-महोदयो निर्दिदेश। (२) आलमोड़ातस्ततः प्रबुद्धभारतस्य प्रधान-कार्यालयो मायावत्यां स्थानान्तरितो बभूव। स्वामिविवेकानन्दशिष्य-स्वामिस्वरूपानन्दो-ऽस्याः पत्रिकायाः प्रथमः सम्पादको बभूव।

---

१) समधिक-विवरणाय "*Life of Swami Vivekananda*" नामको ग्रन्थो द्रष्टव्यः पृः ६३५–६३६। स्वामिमहाराजः अद्वैताश्रमस्य युग्म-प्रतिष्ठातृ-सेभियार-दम्पतिसकाशे लिलेख—"*Here it is hoped to keep Advaita free from all superstitions and weakening contaminations. Here will be taught and practised nothing but the Doctrine of Unity, pure and simple; and though in entire sympathy with all other systems, this Ashrama is dedicated to Advaita and Advaita alone*'.

२) "*Not even the worship of his own Master, which is the Central feature in the other monastic Centres*", *op. Cit. p. 636*

( वेलुडमठप्रतिष्ठानन्तरं द्वितीयवार-पाश्चात्यदेश-गमनपर्यन्तम् )

( १८९९, जानुयारीतः जुन्मासपर्यन्तम् )

स्वजनगणमध्ये स्वामिमहाराजः

स्वामिमहोदयस्य पाश्चात्त्यदेशगमनं स्वास्थ्योद्धारहेतोर्विशेषेण स्थिरीकृतम् । तत्पूर्वं विश्रामोऽप्यवश्यमेव ग्रहणीयः । ततः स जगाम वैद्यनाथधाम । किन्तु तत्र स श्वासरोगग्रस्तो बभूव । ततः पुनराजगाम वेलुडमठे यत्र भूयोऽपि नितरां कर्मव्यग्रो बभूव ।

श्रीठक्कुरवाणी यथा निखिले भारते प्रचारिता स्यात्तदर्थं सर्वे गुरुभ्रातरः संन्यासिनो ब्रह्मचारिणश्च भारतस्य दिग्दिगन्तं गच्छेयुरिति स्थिरीकृतम्। पूर्ववङ्गे प्रचारभारः समर्पित आसीत् श्रीविरजानन्द-प्रकाशानन्दयोरुपरि। स्वामिविरजानन्दः प्रकृत्या लज्जाशीलः परमशान्तश्चासीत् । ततः स सलज्जं स्वामिमहोदयं प्राह—"आर्य ! किमप्यजानता मया किं तत्र वक्तव्यम् ?" स्वामिमहोदयः प्राह—"नाहं किमपि जानामि,—इत्येव ब्रूहि, सैव भविष्यति महत्तमा वार्ता"। ततो धीरं प्राह—तस्य पूर्णब्रह्मण उपलब्धये अन्येषां सेवाऽवश्यं करणीया। स्वकीय-मुक्तिलाभवासनाविनाश एव श्रेष्ठ-साधना। तदनन्तरं स्वामितुरीयानन्द-सदानन्दौ संप्रेषितौ गुजरातं प्रति।

प्रतिदिवसं स्वामिमहोदयस्य संदर्शनार्थं बहवो जना आगच्छन्। स्वामिमहाराजः स्वस्वास्थ्यं प्रत्यनादरशीलः सर्वदा तैः सह धर्म-दर्शन-साहित्य-विज्ञान-प्रभृति-सर्वविषयेष्वालोचनान्यकरोत्। देश-दुर्दशा-वर्णनाकाले चक्षुर्द्वयं तस्य नितरामजायताश्रुभाराक्रान्तम् । युवकानां शारीरिकदुर्बलता (१) तस्यासहनीयाऽसीत् नैतिक-दुर्बलता च ।

---

१) "अस्माकं युवका भवेयुर्बलवन्तः। धर्म एष्यति ततः परम्। गीता-पाठतोऽप्यल्प-कालेन "फुट्‌वल"—क्रीड़या स्वर्गस्यान्तिके भविष्यसि। तव बाहुद्वय-शिरःपेशीषु अन्यासु मांसपेशीषु च बलवत्तरासु, गीताशास्त्रं त्वं



"मानवान्तर्निहित-पूर्णतायाः पूर्णतमविकाशः" आसीत् स्वामि-महाशयस्य शिक्षाया मूलमन्त्रः।

एकदा स्वामिमहोदयेन सार्धं साक्षात्काराय समाजगाम साधु-र्नागमहाशयः। एतौ द्वावास्तां श्रीरामकृष्णपरमहंसदेवस्य द्वे महासृष्टी। एकः संन्यासस्य चरमादर्शः, अन्यश्च गार्हस्थ्यस्य महान् दृष्टान्तः। भक्तचूडामणिर्गिरिशचन्द्र एतयोस्तुलनामुखेन प्राह—"महामाया एतद्द्वयेन हि विजिता। निरन्तरं यतते स्वामिमहोदयस्य बन्धनाय जननी महामाया; किन्तु तस्या बन्धनरज्जुः क्षुद्रा जायते। अन्यतो नागमहाशयस्तथा क्षोदिष्ठो वर्तते यद्बन्धनरज्जुस्तं न बन्धुं शक्नोतीति"।

---

सुष्ठुतरं ज्ञस्यसि। यदि शौर्याधायकं रक्तं वहसि, श्रीकृष्णस्य महाशक्तौ महाप्रतिभाविषये च सुष्ठुतरो बोधस्तव संजनिष्यते। यदा तव शरीरं स्वपादोपरि स्थिरं दण्डायिष्यते, आत्मानं च प्रकृतमानवं मंस्यसे तदोपनिषदं सुष्ठुतरं वेत्स्यसि, तथा चात्म-माहात्म्यम्। युष्मानुद्दिश्य ममेयमाशीः प्रार्थना वा भवतु वो लौहनिर्मितमांसपेशी कठिनायस-स्नायुमण्डली च यदभ्यन्तरे निवत्स्यन्ति वज्रोपादानवस्तुघटितं मनः, मनुष्यत्वं, क्षत्रियवीर्यं ब्रह्मतेजश्च।

*"Our young men must be strong. Religion will come afterwards. You will be nearer to heaven through foot-ball than through the study of the Gita. . . . You will understand Gita better with your biceps, your muscles a little stronger. You will uuderstand the mighty genius of the mighty strength of Krishna better with a little of strong blood in you. You will understand the Upanishads better and the glory of the Atman, when your body stands firm upon your feet, and you feel yourselves as men."* (*Works of Swamiji*, III. 242.) *"What I want is muscles of iron and nerves of steel, inside which dwells a mind of the same material as that of which thunderbolt is made. Strengh, manhood,* **Kshatriya virya** *plus* **Brahma-tejas".**

निगू-ढभावरस-समृद्धमपूर्वं न्वेतादृश-दृश्यं—यदेतयोर्महतोरन्योन्यस्य दैन्यम् अमूल्यं भक्तजनस्य हृदयमनायासं विगलयति। साधुनाग-महाशयो विवेकानन्दं 'शिवं' मन्यते; विश्वविजयी संन्यासी विवे-कानन्दश्च दीनं गृहि-तपस्विनं याचते आशीर्वादभिक्षाम् (१)।

१८९९ खीष्टाब्दीय-जुनमासस्य विंशदिवसे मध्याह्न-समये जननी श्रीश्रीसारदामणिः श्रीविवेकानन्दसमन्वित-सर्वसन्न्यासिपुत्रानुदरपूरं भोजयामास; द्वितीयवारं बहिर्निर्गमनात् प्राग् वरिष्ठपुत्रं सहगामिनं

---

१) विवरणप्रपञ्चाय "Life of Vivekananda" ग्रन्थो द्रष्टव्यः, —पृष्ठं-६३१।

अथान्येद्युः "हितवादी"पत्रिकासम्पादकः पण्डित-सखारामगणेश-देउस्कर-महोदयो बन्धुद्वयेन सह स्वामिसंदर्शनार्थमायाति स्म। बन्धुद्वयस्यैकः पाञ्जाव-निवासी आसीत्। स्वामिमहोदयश्च पाञ्जावस्य दुःख-दैन्य-निवारणालोचन-प्रसङ्गेन दीर्घं समयं निनाय। बहिर्गमनसमये पाञ्जाववासी भद्रलोकः समय-नाशहेतोः स्वामिसकाशे पुरोभागितां प्रकटीचकार। स्वामिमहोदयः सातिशयं व्यथितो जगर्ज इव—"महाशय! यावन्मम देशे कश्चन कुक्कुरोऽपि अभुक्तः स्थास्यति तावत् तस्मै अन्नदानमेव मम श्रेष्ठो धर्मः। तेन विना सर्व एवा-धर्मः।" नूनमेतदेव स्वदेशप्रेम।

वेदान्त-पर्यालोचनायागतमुत्तरदेशीय-पण्डितं कंचनापि स्वामिमहोदयो गूढं तिरश्चकार। तदा समग्रो देशो दुर्भिक्ष-प्रपीड़ित-जनानामार्तनादैः प्रपूरित आसीत्। समागते वेदान्तालोचनाय पडितवरे तस्मै कंचन सुयोगमदत्त्वैव स्वामिमहाराजः प्राह—"पण्डितमहोदय! साम्प्रतं सर्वत्र परिदृष्टं दुःखदैन्यं प्राथम्येन दूरमपसारयतु भवान्। बुभुक्षितान्नाय क्रन्दन्ति निरन्तरं देशवासिनो मे। देशे शान्तिमासादिते वेदान्तशास्त्रविषक-तर्काय भवान् मत्सकाशे आयातु। सर्वथात्मजीवनदानेन मरणापन्नानां जीवनसंरक्षणं—एतदेव वेदान्त-धर्मस्य सार-निष्कर्षः"।

श्रीतुरीयानन्द सहगामिनीं श्रीमतीं निवेदितां च वराशीःकवचै-श्छादितवती। सर्वेषां यात्रा वारेऽस्मिन् सुतरां सफलीभविष्यति मातुराशीर्वलेनेति स्वामिमहोदयः स्वत एव मेने। तद्दिवसेऽपराह्ण एव "प्रिन्सेप्स्-घाट"तस्तेषां शुभयात्रा प्रावर्तत।

स्वामिमहोदयस्य द्वितीयं पाश्चात्यदेशभ्रमणम्

विगत-डिसेम्बर-मासस्य षोडशे दिवस एव स्वामिमहाराजो विलायत-गमन-सङ्कल्पं विज्ञापयामास। ब्राह्मण्यधर्मस्य प्रभावं पाश्चात्त्यदेशे प्रत्यक्षीकारयितुं स्वामिमहाराजस्तुरीयानन्दमामेरिकागमनायानुरुरोध। स्वभावेन परमलज्जाशीलो नित्यध्यान-तपस्यापरायणस्तुरीयानन्द-स्वामिमहाराजो नासीत् साधारणजनपरिचितेरभिलाषी। महता कष्टे-नापि स्वामिमहाराजो न तं स्वमतानुगं कर्तुं शशाक। अथैकदा दार्जिलिं-नगरे, व्यर्थतां यातासु सर्वयुक्तिषु स्वामिमहाराजस्तस्य स्कन्धोपरि वाहुद्वयं वक्षसि च मस्तकं संरक्ष्य शिशुवद् रुदन् प्राह "भ्रातर्हरे! श्रीठक्कुरस्य धर्मप्रचाररतोऽहं प्रायेण मृत्युपथं प्रति धावित इति न पश्यसि? तथापि त्वं मम गुरुकार्यभारम् ईषदपि वोढुं नेच्छसि? अनेन काकूवचसा तुरीयानन्दसमाख्यो हरिमहाराजो विजित आसीत्। तत्क्षणात् स स्वीचकार—स्वामिमहाराजस्याभिलाषप्रपूर्तिं कर्त्तुं यथाशक्ति। तत एव विश्वमातुरिच्छया तुरीयानन्दमहाराजस्यामेरिकागमनं सम्भवपरमभूत्।

---

*1.* विवरण-प्रपञ्चाय *"Life of Vivekananda* ग्रन्थो द्रष्टव्यः, पृष्ठं ६४४। *"Sir; so long as even a dog of my country remains without food, to feed and take care of him is my religion, and anything else is either non-religion or false religion"*.

विदायाभिनन्दन-प्रत्युत्तरमुखेन स्वामिमहाराजः शिष्यान् बन्धुवर्गश्चोद्दिश्य प्राह "आत्मजीवनं सर्वथा पृथ्वी-देव्या वलिरूपेण संस्थापनीयम्। तथा सति परसेवा सुकरा भविष्यति। अत्युच्चासम्भवादर्शोऽन्यायस्याकर एव। बौद्ध-जैन-धर्मसंस्कारकाणामसावासीद् दोषः। आत्यन्तिकाभ्यासाधीनत्वमपि न्याय-

जुनमासस्याष्टाविंश-दिवसे गोलकोण्डा-समाख्यं वाष्पीयजलयानं कलम्बोनगरीं तत्याज। ततो जुलाइमासस्याष्टादशदिवसे एडेन्नगरे, चतुर्दशदिवसे च सुयेजनगरे समाजगाम। सुयेजनगरतः स्वामिमहाराजः कस्मैचन शिष्याय पत्रमेकं समप्रैषयत् यस्मिन् पत्रे भारतीयश्रमजीविनां कृते स्वामिमहाराजस्य महान् हृदयोद्वेगः परिलक्ष्यते। तेन लिखितं, ये किल कृषकाः, तन्तुवायाः, अन्ये च नगण्या मानुषा —विजाति-विजिताः स्वजातिनिन्दिता अन्त्यजाः—ते एव आवहमानकालं कर्म कुर्वन्ति किन्तु परिश्रमफलं न प्राप्नुवन्तीति।

परिपन्थि; आत्यन्तिकावुभौ परित्यक्तव्यौ (*Too much practicality was also wrong. The two extremes must be avoided*). ततः स्वजीवने प्रचुरादर्शवादः प्रचुर-कर्म-साधनेन संयोजनीयः। ध्यान-बलोऽपि मुहूर्तेनापि कृषक-कर्मण्यात्मानं नियोक्तुं सुसज्जो भवेत् संन्यासी। मुहूर्ते कठोरशास्त्र-वचसां सुललिताध्यापन-व्याख्यानादिकं, मुहूर्तान्तरे च सम-कुशलतया हट्टस्थाने भूम्युत्पादित-शस्य-विक्रयणम् इत्येवं विजातीयं कर्म संन्यासिजनेनाभ्यसनीयम्। यथार्थ-मानव-चरित्र-विकाशनम् (*man-making*) एव मठस्योद्देश्यम्। संन्यासिन ऋषयोऽवश्यमेव भवेयुः। स्वयं आद्या शक्तिरिव शक्तिशाली, तथापि मातृ-हृदय-कोमलत्वम् अवलम्बमानः सत्यसन्धो मानवश्चरति (*The true man is he who is strong as strength itself and yet possesses a woman's heart.*) सङ्घं प्रति परमशक्तिपरायणस्तस्याज्ञावहश्च संन्यासिजनो भवेत्। विगत-यामिन्यां संन्यासिसहकर्मिभ्यो दत्तां बाणीमित्थं स्मारं स्मारं तुरीयानन्दसाहचर्यमुदितो विद्यार्थिनीं निवेदितामुपदिशन् परममोदमानः स्वामिमहाराजः शनैः शनैर्माद्राज-नगरी-समुद्रतटं समागच्छत्। तदा कलिकातानगर्यां "प्लेग्"-रोगस्य प्रकोपो बभूवः, ततः "प्लेग्-रेगुलेशन"-हेतोर्भारतीयः कोऽपि न माद्राज-नगरेऽवतरितुं शशाक। परम-भक्तालसिङ्गापेरुमलमहोदयस्य ब्रह्मवादि-पत्रिका-परिचालना-विषयक-परामर्शो विशेषप्रयोजनीय आसीदिति हेतोरसौ तेनैव जलयानेन कलम्बो-नगरीं समचलत्।

महते आनन्दायास्माकमेतद्यत् अस्मिन् वारे स्वामिमहाराजस्तस्य विख्यातं ग्रन्थद्वयं "परिव्राजक"-"वर्तमानभारत"-नामाङ्कितं समुद्र-यात्राकाले बाष्पीय-जलयानावस्थित एव विरचयामास।

लिगेट-दम्पत्योः "रिभालि लज्"—समाख्यभवनेऽवस्थानकाले स्वामिमहोदय एकदा भगिनी-निवेदिताया हस्ते 'शान्ति'-नामधेयं पद्यमेकं ददौ; लेखनकालोऽस्य १८९९ खीष्टाब्दीय-सेप्टेम्बर-मासस्य एकविंशदिवसः—अस्मिन् दिवसे भगिनी-निवेदिता धर्मयाजिका-वेशपरिधानाभिलाषं प्रकटीचकार। शकटेन परि-भ्रमणानन्तरं गृहं प्रत्यागताया निवेदिताया हस्ते स्वामिमहोदयः पद्यमिदमदात (१)।

---

जुलाइमासस्यैकत्रिंशे दिवसे स्वामिमहाराजो लण्डननगर्यां शुभपदार्पणं चकार। "टिलवेरि-डक्"-नामकस्थानेऽवतीर्य स्वामिमहोदयो ददर्श अभ्यर्थनायै समुपस्थितान् बहून् शिष्यान् बन्धूंश्च। लण्डन-नगर्यां सुखमुवास स्वामिमहाराजः सप्ताहद्वयम्। आगष्टमासस्य षोड़श-दिवसेऽभिजगाम निउ-इयर्क-नगरं, सह जगाम तुरीयानन्दः आमेरिकावासि-शिष्याद्वयञ्च।

निउ-इयर्क-नगरे स्वामिमहाराजः प्राक् परिचितयोः लिगेट्-दम्पत्यो-रातिथ्यं परिजग्राह। सेभियार्-दम्पती इव लिगेट्-दम्पती अपि स्वामि-महोदयाय भृशं स्निह्यतः स्म। तौ स्वामिमहोदयं स्वीयं निउ-इयर्क-नगरीतः पञ्चसप्ततिक्रोश-दूरवर्ति-निभृत-पल्लीस्थ-भवनं (*Ridgely Manor*) नीतवन्तौ। मासात् पश्चात् निवेदिता जगामामेरिकाम्। भवनेऽस्मिन् नभेम्बर-मासस्य पञ्चमदिन-पर्यन्तं स्वामिमहाराजोऽवातिष्ठत। दुर्नलस्वास्थ्य-हेतोस्तौ स्वामि-महोदयस्य प्रचारकार्यं नानुमन्येते स्म, चिकित्सायाः पूर्णव्यवस्थां चाकुरुताम्। मासेन स्वामिमहोदयस्य शरीरं काञ्चन स्वस्थतामभजत।

१) पद्येऽस्मिन् स्वामिमहाराजस्य हस्ताक्षरं दिदृक्षुभिः Life of Swami Vivekananda ग्रन्थस्य ६६०—६६१ पृष्ठयोरन्तरालवर्ति पत्रं द्रष्टव्यम्।

परवर्तिदिवसे (सेप्टेम्बर-मासस्य द्वाविंशदिवसे) स्वामि-महोदयस्तस्यायाशीर्वादरूपेणांग्लभाषामयं पद्यमेकमदाद् यस्येदं संस्कृत-रूपम्—

मातुर्ममत्वमथ वीरजनस्य चित्तं
या माधुरी मलयपर्वत-गन्धवाहे ।
निर्बाधकार्चिरनलस्य यदार्यवेद्यां
पुण्योज्ज्वलं ज्वलनमीक्षण-लोभनीयम् ॥१६१

यच्चाप्यतीत-महतां मनसाऽप्यगम्यम्—
एतानि सन्तु निखिलानि तवैव भद्रे !
आगामि-भारतभुवो भविनां जनानां
दासी सखी प्रभुरपि स्वयमेव भूयाः ॥१६२

[ वसन्ततिलकं छन्दः ]

---

*To—Nivedita.*

*The Mother's heart, the hero's will,*
*The sweetness of the Southern breeze,*
*The sacred charm and strength that dwell*
*On Aryan altars flaming free :*
*All these be yours. and many more*
*No ancient soul could dream before,*
*Be thou to Indian's future Son*
*The Mistress, Maid and Friend in One.*

*Vivekananda.*

स्वामिमहोदयस्य "निउइयर्क"-नगरावस्थानकालेऽभेदानन्द-स्वामि-महाराजो न तत्रोपस्थित आसीत् स स्थानान्तर आसीत् प्रचारार्थम्। ततोऽभेदानन्द-स्वामिनः प्रत्यागमनानन्तरमामेरिका-महादेशे वेदान्त-प्रचारबाहुल्यविषये सर्वं ज्ञात्वा स्वामिमहाराजः परमसुखमवाप।

अथ श्रीविवेकानन्दः पार्श्ववर्तिनगराणि परिभ्रम्य कालिफोर्णियायां जगाम। विवेकानन्द सूर्योदयाचलसदृशे चिकागोनगरे स्वामिमहाराजः कतिचन दिवसान् यापयामास। कालिफोर्णियायाः प्रसिद्धनगरे 'Los Angeles'-समाख्ये मिसार्स-ब्लड्गेट् (Mrs. Blodgett) महोदया स्वामिमहोदयमातिथ्यपरिग्रहणाय स्वीकारयामास। स्वामि-

"निउ-इयर्क"-समितेः नभेम्बर-मासस्याष्टम-दिवसीय-सभायां स्वामि-महाराजः सभापतिपदे वृत आसीत्। दशमे दिवसे उक्तभवनस्य पाठशालाया-मभिनन्दनञ्च स्वामिमहोदयायासीद्दत्तम्। अथ न केवलं सभासमितीना-माधिक्यात् जनसमागमाधिक्यादपि स्वामिमहोदयस्य शारीर-क्लेश आसीन्महान्।

कार्यानन्त्यसत्त्वेऽपि कदाचन स्वामिमहोदयः स्व-जीवन-विषये भविष्योक्तिं चकार। अभेदानन्द-स्वामिमहोदयं प्राह—"मम नश्वर-देहस्त्रिचतुर-वर्षा-भ्यन्तरे निश्चितं लयं यास्यतीति।" आमेरिकास्थितस्य तस्य स्वास्थ्योन्नति-रवश्यमेव भवितेति अभेदानन्द-स्वामिमहाराजेन प्रोच्यमानः स्वामिमहाराजः प्राह—"भ्रातः! नैतद्वचनं मम त्वया सम्यग् बुद्धम्। अनुभवामि किल अहं "विशालः" (*big*) अस्मि संवृत्तः। अहं-रूपो जनः तादृग् वर्धते यथा कदाचन मयाऽनुभूयते, देहोऽयं न मामितः परं धारयितुं समर्थो भविष्यति। फट्कृत्याहं विदरिष्यामि। निश्चितमिदं मांसशोणितपञ्जरं दीर्घकालं मां धारयितुं न समर्थं भविष्यति॥" १

"I feel that I am growing very big, Myself is expanding so much that at times I feel as if this body could not contain me any more. I am about to burst. Surely, this cage of flesh and blood cannot hold me for many days more,"

शिष्या मिस्-म्याकलयेड् तत्र पूर्वत एव अवतिष्ठते स्म। स्वामिमहोदयस्तत्र फेब्रुयारीमासमध्यभागावधि अतिष्ठत्। तस्मिन् यदद्भुतं प्रचारकार्यं स्वामिमहोदयश्चकार, तस्य परमशोभना विवृतिर्दृश्यते 'Unity'-समाख्य-पत्रिकायाम्। विश्वविद्यालयाध्यक्षस्य पाण्डित्यं, महाधर्मयाजकस्य गाम्भीर्यं सरल-स्वभावशिशोर्हृदयजयि माधुर्यञ्च स्वामिमहोदये सम्मिलितान्यासन्नित्यत्र स्पष्टतयोक्तम्। (१) भाषणासनमधिष्ठाय श्रीस्वामिमहोदयः केनावर्णनीयोपायेन जगतो निःशेष-विषयान् स्वभाषणान्तर्निवेश्य श्रोतृमण्डल्या हृदयम् ऐन्द्रजाल-क्रिययेव समाचकर्ष, तद्विषये सुष्टूदाहरणानि चात्र दत्तानि।

स्वामिमहोदयस्य कालिफोर्णियावस्थानकाले चत्वारि वेदान्त-केन्द्राणि संस्थापितानि। कालिफोर्णियातः प्रत्यागमनात् प्राक् स्वामि-महोदयस्य धर्मकार्यस्य निर्बाध-संप्रचारार्थं मिस् मिनि सि. बुक् ( Miss Minnie C. Boock)-नाम्नी काचन भक्तच्छात्री १६० 'एकर' परिमितं विस्तीर्ण-भूमिभागं वेदान्तच्छात्राणामवसर-विनोदाय ददौ। पश्चादत्र "शान्त्याश्रमो" विनिर्मित आसीत्। स्वामितुरीयानन्द आगष्टमासस्य द्वितीये दिवसे द्वादशच्छात्रैः सह तत्र सर्वप्रथममगच्छत्। यथा भारतवर्षे, तथा तत्राप्यसौ ध्यानधारणादिषु गभीरं मनो दधे।

---

"There is combined in the Swami Vivekananda the learnin g of a University Professor, the dignity of an arch-bishop, with the grace and winsomeness of a true and natural child."

2. "Getting upon the platform without a moment's preparation, he would soon be in the midst of his subject, sometimes becoming almost tragic as his mind would wander from deep metaphysics to the prevailing conditions in Christian countries of to-day, whose people go and seek to reform the Fillipinos with the sword in one hand and the Bible in the other or in South Africa to cut each other to pieces. In contrast to this condition of things, he described what took place during the last great famine in India when men would die of starvation beside their cattle (cows) rather than stretch forth a hand to kill".

कालिफोर्णियायामवस्थानकाले स्वामिमहाराजः शताधिक-भाषणानि ददौ। स्वामिमहोदय-ग्रन्थपाठमुग्धा जनाः शतशस्तस्य दर्शनलाभायागच्छन्तोऽनाविलां शान्तिं लेभिरे। भगिनी निवेदिता च तस्या विद्यालयस्य कृतेऽर्थ-संग्रहाय भाषणप्रवृत्तासीत्। सा भारतीय-

कठोर-परिश्रमफलेन स्वामिमहाराजस्य स्वास्थ्यं द्रुतमवनतिमभजत। अन्यतोऽसौ क्रमेणाव्यक्त-भावराज्ये नितरां विचरणासक्तोऽजायत। शिष्यां म्याक्लयेड-महोदयां प्रति १९०० ख्रीष्टाब्दीय-एप्रिलमासस्य अष्टादश-दिवसे स्वामिमहाराजो लिलेख—"कर्म-साधनं सर्वथा कठिनमेव। मदर्थं प्रार्थयस्व यथाऽचिराद् मम कार्यमवसानं याति यथा च प्राणा मातृसत्तालीनाः सम्यक्तया तन्मया भवन्ति। तस्याः कर्म, सा स्वयं जानाति···अहं सुस्थोऽस्मि, विशेषतो मनसा। शारीर-स्वस्थताया अभ्यधिकां मानसिक-स्वस्थतामनुभवामि। संग्रामे जयः पराजयश्चोभौ मम घटितौ। वसनाशन-द्रव्याणि सर्वाणि पुञ्जीकृत्य महामुक्तिदात्रीमहमपेक्षे। प्रार्थये च—शिव! शिव! परपारं तरणीं मम नयेति।

"यथा तथा वा भवतु, अहं स एव बालको य एकदा दक्षिणेश्वर-पञ्चवटीतले विपुलविस्मयेन श्रीरामकृष्ण-वाणी-श्रवण-तत्परोऽभवम्। असौ बालकभाव एव मम सत्यप्रकृतिः। कर्माणि परोपकारादीनि बहिर्देशान्-मभ्युपन्यस्तानि।

"पुनरपि तस्य मधुरवाणीं शृणोमि। चिरपरिचितोऽसौ कण्ठस्वरः येन मम मनसोऽन्तरतमस्थलमपि भवति समुल्लसितम्। बन्धनानि स्खलितानि; प्रेम मरणोन्मुखं, कर्म च जायते स्वादहीनं; जीवनं प्रत्याकर्षणमपि दूराद्दूरतरं गतम्। केवलं प्रभोः कातराह्वानं श्रूयते, 'देवदेव! यामि यामी'ति वदामि च। "मृत-सत्कारं मृता एव कुर्वन्तु; त्वं मामनुसर" इति वदति प्रभुः। "यामि, प्रभो! यामि" इति च मम प्रत्युत्तरम्।

"असौ पुरातनः शिक्षादाता, गुरुर्नेताऽऽचार्यश्चिराय गतः। विद्यते साम्प्रतं खल्वसौ बालकः, शिष्यः, दासः, श्रीगुरोः" इति।

नारीणाम् आदर्शचरित्रनिष्ठाप्रभृतिविषये मनोहारीणि भाषणानि प्रदत्तवती।

"साइक्लोनिक-हिन्दु" विवेकानन्द इतः प्रभृत्यजायत प्रशान्त आत्म-समाहितश्च। प्यारिसप्रदर्शनी-धर्ममहासभायां वक्तृताप्रदानाय समाहूतः स्वामिमहाराजः जुलाइ-मासस्य विंशतितमे दिवसे फ्रान्सा-भिमुखं ययौ। फ्रान्सदेशे तद्देशीय-भाषां विना कार्यपरिचालनासौकर्यं भविष्यतीति मन्यमानः स्वामिमहाराजोऽत्यल्पदिवसैस्तां भाषामायत्ती-चकार। प्यारिस्नगरे स्वामिमहाराजो लिगेट्दम्पत्योरतिथिरासीत्। कतिपय-दिवसेभ्यः पश्चात् स्वामी सांवादिकदार्शनिक-मसियें-ब्युलस् वयेज-महोदयस्यातिथ्यं स्वीचकार।

"निउइयर्क"-नगरीतः फ्रान्सदेशे आगमनात् प्राक् स्वामिमहाराजः स्वामितुरीयानन्दं मातृशपथेन कथमपि कालिफोर्णियास्थ-शान्त्याश्रम-गमनाय स्वीकारयामास। पुनस्तुरीयानन्दे स्वामिमहोदयस्य फ्रान्सदेश-गमनकाले कञ्चनोपदेशं प्रार्थयमाने स्वामिमहाराजः प्राह, नामापि विस्मर। सत्यजीवनं यापय ; जननी अन्यत् सर्वं संरक्षिष्यति ( *Live the life ; and Mother will see to the rest*).

प्यारिसस्थ-विशाल-प्रदर्शनी-धर्मेतिहास-सभामुपलक्ष्य तत्राभूद् बहु-पण्डितसमावेशः। प्यारिस-नगरे धर्मसम्मेलनस्य प्रथम-भाषणे स्वामि-महाराजः जार्मान्-देशीय-गुस्ताभ-ओपेर्ट (*Gustav Oppert*)-नामक-प्राच्य-तत्त्वविदो मतस्य कस्यचन विरोधं चकार। असौ गुस्ताभ-महोदयः प्राह—शालग्रामशिलायाः तथा च शिवलिङ्गस्य (१) प्रादुर्भावेतिहासः आदिम-वासिनां योनि-पूजया सह संपृक्त इति। युक्ति-तर्क-बाहुल्येन स्वामिमहाराजः

1. "The explanation of the Shalagrama Shila as a phallic emblem was an imaginary invention. It has been a degenerate period of India following the downfall of Buddhism which had brought on the association of sex with the Shiva-linga. In reality, the Shiva-linga and Shalagrama Shila had no more to do with Sun-worship than the Holy Communion in Christianity had in common with cannibalism."



प्रमाणीचकार यद्वेद-प्रमाणत एव विशेषेण एतन्निश्चितं सिध्यति यत् शिवलिङ्गस्य ऐतिहासिक-सम्पर्को यूपकाष्ठेन, नत्वादिमवासिनां योनि-पूजया। पर्याय-भेदेन शालग्रामशिला-शिवलिङ्गपूजेतिहासस्य परिणतिं महता पाण्डित्येन स्वामिमहाराजो वर्णयामास। उदारहृदयो विवेकानन्दः सर्वैः सह आलापालोचन-तत्परः सर्वेषां प्रीतिवर्धनः सन् स्वकीय-स्वभावसिद्धभङ्ग्या श्रीरामकृष्णमतं भूयसा प्रचारयामास।

द्वितीय-भाषणे च स्वामिमहाराजः—एकस्माद् वेदादेव हिन्दु-बौद्ध-धर्मयोरुत्पत्ति-विषये, कृष्ण-बुद्धेतिहास-परम्पराविषये ग्रीक्-भारतीय-सभ्यतयोः सम्पर्कविषये (२) च स्वकीयमतानि प्रचारयामास।

प्यारिस्-नगरे एडिनवरा-विश्वविद्यालयस्याध्यापक-प्रवर-प्रेट्रिकगेडिस्-इउरोपिय-श्रेष्ठ-गायिका-म्याडाम्क्यालभे-सुप्रसिद्धाभिनेतृ-सारावार्णहार्ड-वैज्ञानिकश्रेष्ठ-स्वदेशवासि-सार-जगदीशचन्द्र-वसु-महोदयैः सह स्वामिविवेकानन्दस्य हार्दिकः सम्बन्धः समजायत। समग्र-पण्डितमण्डलीमूर्धनि स्थितः डाः-जगदीशचन्द्र-वसु-महोदयः स्व-प्रतिभामहिम्ना समग्र-पाश्चात्त्य-पण्डित-मण्डलीं संतोष्य भारतवर्षस्य वदनमण्डलं प्रोज्ज्वलीकृतवान्; तद्विषयक-विशेषोल्लेखो दृश्यते स्वामिमहाराजस्य "परिव्राजक"-ग्रन्थे। कस्यांचित् सभायां काचन ब्रिटिशाध्यापकस्य छात्री प्राह—तस्या गुरुर्वर्धन-हीन-नलिन्या विवर्धन-विषये गवेषणारत आसीदिति। तदुत्तरतया स्वामिमहाराजः प्राह—*"O that is nothing! Bose will make the very pot in which the lily grows respond!"* प्यारिस्-प्रदर्शनीसम्पर्कि-धर्मेतिहास-सभाया अधिवेशनेषु समाप्तिं यातेषु स्वामिमहोदयः मिसार्स-ओलिबुलमहोदयाया अतिथिरूपेण तस्या ल्यानियन-नगरस्थित-क्षुद्रकुटीरे कतिचन दिवसान् व्यनैषीत्।

---

2. "The Swami closed his arguments with the sound counsel that Western orientalists who spent so much time on a single Greek work, should do likewise with Sanskrit works; then only some true account of the exchange of ideas between East and West, in various historic periods, could be gathered. Like Pythagoras, the celebrated Greek, whom Clement of Alexandria had no hesitation in calling a pupil of the Brahmanas, they might even come to India to learn".

मासत्रयं फ्रान्सदेशेऽवस्थाय स्वामिमहाराजः भियेना-कन्ष्टान्टिनोपल्-एथेन्स्-प्रभृति नगर-परिदर्शनाय प्रतस्थे (१)।

### मायावती-पूर्ववङ्गासामाञ्चल-भ्रमणम्

स्वदेशे प्रत्यावृत्त्यैव स्वामिमहोदयो मायावतीगमनाय मनो दधे। यतो मिसार्स सेभियार्-महोदयायाः पतिशोकजनित-गुरुतमदुःखाभिभूतायाः सान्त्वनादानं स्वामिमहोदयस्यावश्यकर्तव्यम्। वारेऽस्मिन् स्वामिशिवानन्द-सदानन्द-विरजानन्दादयः सहगामिन आसन्।

---

गणतान्त्रिक-स्वाधीनतापीठ-भूमौ-प्यारिस-नगरे स्वामिमहाराजो ददर्श ऐश्वर्य-शिल्प-कला-साधनागरीयस्याः पाश्चात्त्य-सभ्यताया नग्नं रूपम्; साम्राज्यवादिनां हिंस्रं लोभम्, सभ्यतावहिरावरणपरिवृतानामियोरोपदेशानां निखिलविश्वे साम्राज्य-प्रतिपत्ति-विस्तारार्थमुन्मत्त-प्रतियोगिताञ्च। इंलण्डदेशस्य दृप्तमाभिजात्यं तथा फ्रान्सदेशस्य भोगोन्मत्ततां वीक्ष्य स्वामिमहाराजः प्राह "पाश्चात्त्य-सामाजिक-जीवनं बहिर्मधुरहास्यवत् मनोहरं किन्त्वस्य तलदेशो हाहाकारपूर्णो रोदनध्वनिपूर्णः सहसा भंक्ष्यति। कौतुक-लघुचापल्यान्तस्तिष्ठति लुक्कायिता गभीर-वेदनानुभूतिः। एतत् क्रन्दनं, मानवात्मनोऽयं करुण आर्तनादः।" जड़वादि-सभ्यता-महाकेन्द्रस्थले दण्डायमानो विवेकानन्दो युद्ध-राष्ट्रविप्लवयोर्दूरागत-पदध्वनिं शुश्राव। तत एवासौ चकार भविष्यद्वाणीं—यदि पाश्चात्त्याधुनिकविज्ञानेन सह प्राच्यप्राचीनाध्यात्मिक-विज्ञानं न भवेत् संयुक्तं, तदा इयोरोपस्य ध्वंसोऽनिवार्य एव।

१) मिशरीय-पिरामिड-स्फिन्स्क-प्रभृतिकं दर्शं दर्शं स्वामिमहाराजस्तत्तद्विषयाणां प्रसिद्धिकारणं विश्लेषयामास सङ्गिगणसमीपे। मिशरदेश-पदार्पणसमकालमेव स्वामिविवेकानन्दस्य भारत-प्रत्यावर्तनेच्छा बलवती बभूव। यतो दिव्यदृष्ट्या स्वामिमहोदयो ददर्श यत् मायावती-केन्द्रसंस्थापक-"सेभियार"-महोदयो धराधाम चिराय त्यक्तवान्। १९०० खीष्टाब्दस्य डिसेम्बर-मासस्य नवमे दिवसे यामिन्यां स्वामिमहाराजोऽप्रत्याशितो बेलुड़मठे समुपस्थितो बभूव। दीर्घकालानन्तरं स्वामिमहोदयं दृष्ट्वा सर्वेषां हृद्यपूर्वानन्द-सञ्चारोऽभूत्।

१६०१ ख्रीष्टाब्दीय-जानुयारी-मासस्य चतुर्विंशे-दिवसे स्वामिमहाराजः कलिकातायां प्रत्यावृत्तो बभूव ।

मायावतीतो वेलुडमठं प्रत्यागतः स्वामिमहाराजो विश्राम-सुचिकित्सादिबलेन कथञ्चित् स्वस्थतामभजत । कालेऽस्मिन् यथा स्वामिमहाराजः पूर्ववङ्गासामस्थ-चन्द्रनाथकामाख्या-प्रभृति-तीर्थ-स्थानानि द्रष्टुम् औत्सुक्यमनुबभूव, तद्वत्तस्य वृद्धा जननी भुवनेश्वरी देव्यपि । ततः १६०१ ख्रीष्टाब्दीय-मार्चमासस्य अष्टादशदिवसे संन्यासिशिष्यैर्मात्रा च सह पूर्ववङ्गासाम-तीर्थक्षेत्राणि द्रष्टुं स्वामि-महाराजो निर्जगाम । परस्मिन् दिवसे स ढाकानगरीमगच्छत् ।

ढाकायामवस्थानकाले काचन वारवनिता बहुमूल्यवस्त्रालङ्कार-भूषिता स्वजनन्या सह स्वामिमहोदयस्य संदर्शनार्थमाजगाम । सा दुरन्तश्वासरोगग्रस्ता स्वामिमहोदयं रोगशान्तिं ययाचे । परम-दयालुः स्वामिमहाराजः प्राह—"मातः! यद्यहं सत्यं तादृश-शक्ति-सम्पन्नः स्यां, कथं ममापि श्वासरोगो न प्रशाम्येत् ? अवश्यमहं प्रार्थये त्वं श्वासरोगमुक्ता भव" । मिष्टभाषणादिभिः परमतृप्ता सा वारवनिता सुखविगलितचेतसा स्वस्थानं प्रतस्थे ।

ढाकात एकदा स्वजनन्या भुवनेश्वरीदेव्या सह स्वामिमहाराजो लाङ्गलबन्धं प्रति प्रतस्थे ब्रह्मपुत्रपुण्यसलिलावगाहनाय । तेन तस्य जननी परमपरितृप्ता बभूव (१) ।

---

१) स्वामिमहाराजः परममातृभक्त आसीत् । तस्यामेरिकामहादेशा-वस्थानकाले अकारण-केवलविद्वेषप्रसूतायां कुत्सायां रटितायां स्वामिमहाराजो मिस् इसाबेल-म्याक्किण्डलिमहोदयासकाशे लिलेख—वृद्धा माता ममाद्यापि जीविता । यदि सा शृणोति कुत्सां रटितां, तस्या दारुणः क्लेशः संजनिष्यते ।

ढाकायामवस्थानकाले स्वामिमहाराजः साधु-दुर्गाचरण-नागमहाशयस्य पल्लीस्थवासभवने जगाम । विगते (१६००) डिसेम्बर-मासि साधुर्नागमहाशयः

यात्राशेषे

पूर्ववङ्गासामपरिभ्रमणानन्तरं मे-मासस्य मध्यभागे वेलुडमठं प्रत्यावृत्तस्य स्वामिमहाराजस्य शरीरावस्था सर्वेषामुद्वेगकारणमभूत्। श्वासरोगस्य प्राबल्यं तथा नासीत्; किन्तु बहुमूत्ररोगाक्रान्तस्यास्य शोथरोगः सर्वेषां गभीरातङ्कं जनयामास।

वैद्यक-शास्त्रानुसारेण देशीय-चिकित्सा स्वामिमहाराजस्य प्रचरति स्म। भैषज्यानुपानपथ्यादिषु नासीत् काचिन्न्यूनता। स्वामिमहोदयोऽपि शान्तशिष्टवत् विधिनिषेध-पालनतत्परो बभूव। कथमुपकारो नानुभूयते—इति कस्मिंश्चित् पृच्छति स्वामिमहाराजः प्राह—

---

स्व-साधनोचितधाम्नि प्रतस्थे। साधु-नागमहाशयस्य परमसाध्वी पत्नी तद्दिवसे आन्तर-सुधा-सेकमधुरेण परमयत्नेन विश्व-वरेण्यातिथिश्रेष्ठस्य सत्कारं विदधे। जनकोपम-साधुमहात्मगृहे स्वामिमहाराजो यादृशीं तृप्तिमलभत, न तादृशीमन्यत्र कुत्रापि इति स्थिरमेव।

ढाकातश्चन्द्रनाथं ततः कामाख्यामन्दिरं वीक्ष्य स्वामिमहाराजो गोयालपाडा-गौहाटीतः शिलं-नगरं ययौ। तत्र सार-हेन्‌रीकटनमहोदयेन स्वामिमहोदयस्य साक्षात्कारः समजनि। असौ महात्मजनः स्वामिमहोदयं प्राह—"स्वामिमहाराज! इउरोपामेरिका-प्रसिद्ध-स्थानानि समालोक्य कथं भवान् जाङ्गलदेशमिमं समागतोऽस्ति?" सानुरागं कटन-महोदयं समालिङ्ग्य स्वामि-महोदयः प्राह—"भवादृश ऋषिजनो यत्र वसति, तत्तीर्थस्थानमेव। ततस्तीर्थदर्शनाय समागतोऽस्मि।" स्वामिमहोदयस्य चिकित्सनार्थं कटन-महोदयः स्थानीय-"सिभिलसार्जन"—महोदयमनुरुरोध। असौ चिकित्सकवर्यः स्वामिमहोदयस्य रोगपरीक्षणार्थं प्रतिदिवसं वारद्वयम् आगच्छति स्म। सर्वव्यवस्थावलम्बनसत्त्वेऽपि स्वामिमहोदयस्य रोगोपशमो नाभूत्। दारुण-श्वासरोगकष्टे किञ्चिदपसृते सति शिलं-नगरतः मे-मासस्य द्वितीये सप्ताहे स्वामिमहाराजो वेलुड़मठं समाययौ।

'उपकारापकारवार्तालेशमपि नाहं जानामि, केवलं गुरुभ्रातॄणाम् आदेशं परिपालयामि इत्येव जाने'।

यद्यपि कठिनरोगाक्रान्त आसीत् स्वामिमहाराजः, तथापि शिक्षादानालापालोचन-प्रभृति-विषये नासीत् तस्य काचन श्लथता। महाप्रयाण-पूर्वदिवसपर्यन्तं स्वामिमहाराजो नवागतान् शास्त्राणि पाठयामास, ध्यानादिविषये तेभ्य उपदेशञ्च ददौ। यो धर्मसङ्घो निखिलं विश्वं आगामीनि बहुवर्षशतानि धर्मशिक्षां दास्यति, तस्य संघटनाय स्वामिमहाराजः शेषरक्तबिन्दुमपि ददौ।

वेलुडमठावस्थानकाले स्वामिमहोदयस्यान्तिम-दिवससमूहे युगाचार्य-जीवनस्य प्रकृष्टरूपं पूर्णतया संप्रकटितं बभूव। कौपीनमात्रधारी कदाचनासौ मठप्राङ्गणे तरुतलवासि-संन्यासिवद् दण्डहस्तः परिबभ्राम। कदापि गृहपालित-कुक्कुरच्छाग-हंसादिभिश्चिक्रीड, कदापि वा गुरुभ्रातृ-शिष्यवर्गसमक्षं हासोर्मिराशिमुत्पादयामास।

स्वामिमहोदयस्य स्वास्थ्यविषये चिन्तापरायणाः केचन पाठनादि-विषये तस्य विरतिं संप्रार्थ्य किञ्चिद् अभाषन्त चेत् स्वामिमहोदयः प्रत्युत्तरमुखेनावदत् "दूरं यान्तु सर्वे विधिनिषेधाः। यद्येतेषु कश्चिदपि यथार्थ-जीवनयापने समर्थो भवेत्, मम सर्वपरिश्रमः सार्थक्य-मवाप्स्यति" (१)।

---

१) समायातो वर्षाकालः। अत्र स्वामिमहाराजस्तुलनया स्वस्थतरता-मभजत। प्रतिदिवसं मठस्थानतः कियद्दूरं गुरुभ्रातृणा शिष्येण वा केनचित् सह स भ्रमति स्म। काचन निगूढा चिन्ता स्वामिमहोदयस्य अन्तर्लीनासीदिति ध्रुवम्। तथापि वदनं तस्य स्मितराशिं न परितत्याज।

वर्षाया अपगमने समायाता शरत्। मेघमुक्त-निर्मलाकाशे विचित्रः सौरकिरणः क्रीड़ति; सर्वत्र काशकुसुमानां हिन्दोलान्दोलनं, शिशिरस्नाताः शुभ्रशेफालिकाः शतशः स्तरमालया वसुन्धरामातृपदं सप्रेम चुम्बन्ति। स्वामिमहोदयस्य मनस्यजायत श्रीदुर्गापूजा-वासना। स्वामिमहोदयो जननीं

माता भुवनेश्वरी पुत्रस्य रोगशान्त्यर्थं कालीघट्टधाम्नि कालीपूजां दातुमिच्छन्ती पुत्रमपि तत्र गमनायानुरुरोध। (१)

ज्ञान-सूर्यो यस्य हृदयेऽनिशं देदीप्यते, वेदान्त-शास्त्रस्याद्वितीय-पण्डितो जगज्जन-चित्तजयी स्वामिमहाराजो युगाचार्यः सन्न्यासी मातुर्धर्म-विश्वासं निरतां श्रद्दधानस्तत्क्षणाज्जनन्यभिलाषे स्वीकृतिं ज्ञापयामास। बालशिशुरिव पूतभक्तिभूषणः स्वामिमहाराजो जनन्या सारदाम्बिकां पूजानुष्ठानानुमतिं ययाचे। मातुरनुमतिक्रमेण षोडशोपचारैर्जगज्जननी-वन्दनायाः सर्वाण्युपकरणानि संपादयामासुः सन्न्यासिनो ब्रह्मचारिणश्च। माता सारदामणिर्न केवलमनुमतिं ददौ, परन्तु स्वयमेवोपस्थिता शास्त्रविधि-सम्मतां पूजामवैक्षत। पूजान्ते सा सर्वान् सन्तानान् आशीर्वादधन्यांश्चाकरोत्। श्रीमातुरनभिप्रेतमिति हेतोः पूजायां वलिदानं न कृतम्।

अस्यां पूजायां पूजक आसीद् ब्रह्मचारी कृष्णलालस्तन्त्रधारक आसीच्छ्रीरामकृष्णपितृदेवः साधक ईश्वरचन्द्र-भट्टाचार्यः। ("स्वामि-शिष्य-संवाद"-नामक-ग्रन्थस्य ३६-अध्यायो द्रष्टव्यः ; "स्वामिजीर वाणी ओ रचना"-ग्रन्थमालाया नवमखण्डस्य २२६-पृष्ठं द्रष्टव्यम्।) अयमेव श्रीबेलुडमठे दुर्गापूजा-प्रारम्भणस्येतिहासः। अत्रैव वत्सरे तत्र यथाकालं श्रीलक्ष्मी-पूजा तथा काली-पूजा चानुष्ठीयेते स्म। पूजास्वेतासु दरिद्रनारायण-पूजनमप्यक्रियत परमोत्साहेन स्वामिमहाराजेन गुरुभ्रातृभिः शिष्यैश्च। स्थानीयाः परिचिता बहवः पण्डिताश्चामन्त्रिता आसन्; सानन्दास्ते आजग्मुश्च। ये केचनामन्यन्त—सामाजिकाचारपालन-विषये मठस्था जना उदासीना इति, ते साम्प्रतममन्यन्त एते साधवोऽपि आचारवन्तो हिन्दव इति।

१) भवतु वा स्वसन्तानः संसारत्यागी संन्यासी—तथापि स मातुश्चिरायाञ्चल-निधिरित्यत्र कः सन्देहः। संन्यासिपुत्रस्य व्याधेराधिक्यं विलोकयन्ती जननी भुवनेश्वरी एकदा सस्मार यत्—शिशु-नरेन्द्रस्यैकदा व्याधिसमये सा कालीघट्टस्थ-श्रीकालीसमीपे काञ्चन पूजा-प्रतिश्रुतिं (मानत) कृतवतीति।

**सह कालीघट्टं गत्वा मातुरादेशक्रमेण गङ्गायामवगाह्य सिक्तवस्त्रेण काली-मन्दिरं प्रविवेश, चिन्मय्या जगज्जनन्याः पाददेशे वारत्रयं लुण्ठितश्च बभूव। ततः सप्तकृत्वः श्रीमन्दिरं प्रदक्षिणीकृत्यानावृत-मन्दिरचत्वरे पूतहोमाग्निं प्रज्वलयामास।**

अहो दैवदुर्विपाकेन सर्वमेव तद्विस्मृतमासीत् जनन्या। जननी भुवनेश्वरी अचिन्तयत्—

प्रतिश्रुतं प्राग् जगतो जनन्यै
मयाऽर्चनं यत् सुतरोगशान्त्यै।
भ्रमात् तदद्यापि यतो न दत्तं
ततः प्रकोपोऽस्य रुजोऽस्ति तीव्रः॥ १६३

अचिराज्जननी श्रीविवेकानन्दं तद्विषयं विज्ञापयामास।

१९०१ खीष्टाब्दस्यान्तिमे भागे बहवः "सान्ताला"आदिवासि-श्रमजीविनो वेलुडमठस्य प्राङ्गणे कर्मरता आसन्। तेष्वेकः "श्रीकृष्ण" (केष्टा)-नामा स्वामिविवेकानन्दस्य परमप्रिय आसीत्। स्वामिमहाराज एकदा तान् भोजयितुमियेष। किन्तु श्रीकृष्णः प्राह—स्वामिमहोदय-पक्वमपि लवण-मिश्रितं खाद्यं सामाजिक-नियमानुसारेण ते न भोक्तुं समर्थाः। ततो विना लवणं स्वामिमहाराजः खाद्यं पक्त्वा तान् परमानन्देन भोजयामास। अनया नर-नारायण-सेवया स्वामिमहाराजस्य महानानन्दोऽभूत्। तेऽपि भोजनेन परम-परितुष्टाः प्रोचुः—समग्र-जीवने एतादृशं सुखाद्यं न तैर्भुक्तमिति। अतः पश्चादेतद्विषयमधिकृत्य स्वामिमहोदयो ब्रह्मचारिणः संन्यासिनश्च समाहूय तानेतेषां कृते प्राणत्यागायाप्युपदिदेश। पुनः उच्चश्रेणीनां सहानुभूतेरभावहेतोः कति न माद्राजवासिनः "पञ्चियाः" सञ्जाताः। केवल-क्षुधा न तत्र कारणं, परन्तु प्रेमाभावः, स्नेहाभावः सहानुभूतेरभावश्च तत्र मुख्य-कारणम्। पुनरपि स्वामिमहोदयः प्राह—"यदि समस्तशरीरेष्वङ्गमेकपि भवति विकलं, तदा समग्रं शरीरं व्याधिग्रस्तं भवतीत्यत्र कः सन्देहः?" अथ कस्मिंश्चिच्छिष्ये धर्मसम्प्रदायेषु मेलनसंविधानस्य काठिन्य-विषये वदति सति

१९०१ खीष्टाब्दीय-डिसेम्बरमासस्यान्तिमे भागे निखिल-भारत-जातीय-कंग्रेसस्याधिवेशनं कलिकाता-नगर्यामनुष्ठितमासीत्। भारतवर्षस्य दिग्दिगन्तेभ्यो नेतृवृन्दं प्रतिनिधिवृन्दश्च सभायाम् आजगाम। एतेषामनेके स्वामिसहोदयस्य संदर्शनमभिलषितवन्तः। ततस्ते वेलुड़-मठं जग्मुश्च। तैः सह स्वामिमहाराजः प्रायेण हिन्दी-भाषयैवाभाषत। कंग्रेस-नेतृवर्यैः सह भाषणावसरे स्वामिमहाराजो वैदिकविद्यालय-संस्थापनाय विशेषेण संस्कृतशिक्षायाः संप्रसारणाय तेषां दृष्टिमाचकर्ष। नेतृवर्याश्च तस्य युक्तिबलेन समाकृष्टा बभूवुः। जीवनस्यान्तिमसमयपर्यन्तमियमिच्छा स्वामिमहाराजस्य वरीवर्ति स्म। महातिरोधानदिवसेऽपि स्वामिमहाराजो वैदिक-विद्यालय-संस्थापनविषये गुरुभ्रात्रा सह पर्यालोचयामास। प्रयोजने सति उद्बोधन-मुद्रणालय-विक्रयेणापि अर्थसंग्रहः करणीय इति स्वामिमहाराजो बभाषे। अथ तस्य महातिरोधाने संघटिते नैष सङ्कल्पः कार्येण रूपायित आसीत् (१)।

---

स्वामिमहोदयस्तं तिरश्चार। सर्वभूतान् सेवमान एव भगवन्तं भजेतेति स्वामिमहोदयः पुनः पुनः प्राह।

१) वर्षस्यास्य शेषभागे वेलुडमठं समायातौ द्वौ प्रख्यातौ जापानवासि-पण्डितौ रेभारेण्ड-ओडा—डक्रोकाकुरा-संज्ञकौ। रेभारेण्ड-ओडामहोदयः जापानदेशीय-प्रख्यातमठस्य कस्यचित् सर्वाधिनायक आसीत्। एतयोरिच्छासीत् जापानदेशे धर्ममहासभायाः कस्याश्चनानुष्ठानम्। तत्र स्वामिमहाराजस्य साहायकस्यावश्यप्रयोजनमिति तावकथयताम्। तावमन्येताम्—जापाने जय-सभ्यतायाः प्राबल्यहेतोर्धर्मभावाभावो मारात्मकरूपेण प्रादुरास्त इति। दैहिका-स्वस्थतां विस्मरन्नेव स्वामिमहाराजो जापानगमन-विषये स्वीकृतिं ददौ।

रेभारेण्ड-ओका तथा च डक्रोकाकुरा स्वामिमहोदयस्य बौद्ध-विषयकं ज्ञानं तथा भक्ति-प्रकर्षं वीक्ष्य समशयेतां यदेष बौद्ध-संन्यासी हिन्दु-संन्यासी वेति।

**वाराणसीधाम्नि तदा कतिचन युवकाः सङ्घं विनिर्माय स्वामिप्रवर्तित-सेवाव्रतं प्रारेभिरे। तदा ते कस्मिंश्चिद् भाटकप्राप्तगृहे कार्यं कुर्वन्ति स्म। राजपथेभ्यः 'भांङ्गा'घट्टेभ्यश्च रुग्नानाथातुर-तीर्थयात्रिणः संगृह्य ते भैषज्यपथ्यादिदानेन तेषां साहायकमकुर्वन्। एतेषां युवकानां धर्म-कर्म-**

---

१९०२ खीष्टाब्दस्य जानुयारीमासि डाः ओकाकुरा-महोदयस्यैकान्तिके-च्छया स्वामिमहाराजो बुद्धगयायां जगाम। इच्छासीदस्मात् स्थानात् वाराणसीधाम गत्वा तत्र स कियत्कालं स्थास्यतीति।

बोधिद्रुममूले समुपविष्टः स्वामिमहोदयो मनसा भगवन्तं तथागतं सस्मार—

सद्यः-प्रसूततनयामनुरक्तजायां
वृद्धौ विहाय पितरौ च तथा च राज्यम्।
अन्वेष्टुमस्य जगतो निखिलस्य मुक्तिं
यः प्राविशद् वनपथं तमहं नतोऽस्मि॥ १६४

तदनन्तरं स बोधिद्रुमेऽपि स्वीयं श्रद्धामित्थमाविश्चकार—

सोऽयं तरुश्चलदलः सुतरां पवित्रो
मूले न्युवास भगवांश्चिरमस्य बुद्धः।
ज्ञानञ्च दिव्यमत एव यतः स लेभे
बोधिद्रुमोऽभवदमुष्य ततोऽभिधानम्॥ १६५

बोधिद्रुममूले ध्यानासन-रतः कतिचन दिवसान् परमानन्देन यापयित्वा स्वामिमहाराजो जगाम वाराणसीम्।

अत्र संरक्षणशीलमठाध्यक्षाः पण्डिताश्च स्वामिहोदयेन सह वादानुवाद-प्रवृत्ता अपि तस्य तेजस्वितां वीर्यम् असीमपाण्डित्यं च दृष्ट्वा विस्मिता बभूवुः, तमुच्चैः प्रशशंसुश्च। अत्रावस्थानकाले "भिङ्गा"-महाराजस्तं रामकृष्णसङ्घ-शाखामेकां वाराणस्यां प्रतिष्ठापयितुमनुरुरोध। तदभिप्रायं स्वीकुर्वाणः स्वामिमहाराजः पश्चात् शिवानन्दमहाराजं यथोक्तकार्यार्थं वाराणसीधाम प्रेषयामास।

निष्ठया स्वामिमहाराजः परम-परितुष्टो बभूव। अन्तस्तले स्वामि-महाराजस्य दुःखमासीद् यत्—

सर्वे युवानः समवेत्य गोष्ठ्यां
धर्मोपदेशं नितरां गिलन्ति ।
उपागते कार्यविधौ पुनस्ते
पृष्ठानि सद्यो बत दर्शयन्ति ॥ १६६

अद्य तस्य तद्दुःखं दूरं गतम्। तेनानुभूतं किल यद् दीर्घकालाद् यानि बीजानि भारतवर्षस्य पथि प्रान्तरे हट्टे सर्वत्रोप्तानि तेषामेक-तमस्याप्यन्ततो गत्या अङ्कुरोद्गमः स्वचक्षुर्भ्यां तेन परिदृष्टः किल। तृप्त्यानन्दाभ्यां मनस्तस्य वर्षाकालीन-तटिन्याः कूलमिव प्लावितं बभूव।

श्रीठक्कुर-रामकृष्णपरमहंसदेवस्य जन्मोत्सवदिवसात् प्राक् स्वामि-महाराजो वेलुडमठं प्रत्याजगाम। वाराणसीधाम्नि मासद्वया-वस्थानेन शरीरेऽस्य काचन समुन्नतिरजायत। किन्तु प्रत्यागमनस्य दिनद्वयानन्तरमेव तस्य दैहिकावनतिः सर्वेषामुत्कण्ठाकारणमभूत्। जलसञ्चारोऽभूत् समग्र-देहे ; शोथाधिक्यञ्चादृश्यत पादयुगले। आशङ्कोद्वेगच्छाया समवतरद् बेलुडमठे।

---

वाराणसीतोऽस्मिन् काले स्वामिस्वरूपानन्दाय विलिखिते स्वामि-महोदयस्य पत्रे दृश्यते—तदा स्वामिमहाराजो बौद्धधर्म-विषये विशेषेणानु-शीलनतत्परो बभूवेति। तन्मते महायानबौद्धधर्मो हीनयानतः प्राचीनतरः। बौद्ध-परवर्तिहिन्दु-धर्मयोः पारस्परिक-सम्पर्क-विषयेऽपि तस्य मतं प्रचलितमत-विरोध्यासीत्।

"I hold the Mahayana to be the older of the two Schools of Buddhism."

"A total revolution has occured in my mind about the relation of Buddhism and Neo-Hinduism. I may live to work out the glimpses, but I shall have the lines of work indicated, and you and your brethren will have to work it out."

उत्सवस्य दिवसे मठस्थ-विशालप्राङ्गणे प्रभूतजनसमावेशः, मन्दिरे पूजारात्रिकादिकं, बहिश्च भजनकीर्तन-प्रसादवितरणादि। शय्यां त्यक्त्वा बहिरागमने न समर्थ आसीत् स्वामिमहाराजः। तस्य शारीरिकावस्था जनयामास सर्वेषां विषण्णताम्। प्रियशिष्यः शरच्चन्द्रचक्रवर्ती तद्दिवसे गुरुदेवसकाशे उपविष्ट आसीत्। गुरुदेवस्य रोगयन्त्रणां शरीर-दुर्बलावस्थां च वीक्ष्य शिष्यस्याश्रूद्गमोऽभवत्। स्वामिमहाराजस्तं सान्त्वयितुमवदत् "किं चिन्तयसि? ममायं देहो जातः, मरणञ्चास्य अनिवार्यमेव। यदि युष्मासु भावान् मेऽनुप्रवेशयितुं समर्थो भवामि, ज्ञास्यामि जन्म मम सार्थकमि"ति (१)।

---

गुरुभ्रातॄणां निर्बन्धातिशयेन स्वामिमहाराजः कविराज-महानन्दसेन-महाशयस्य चिकित्साधीन आसीत्। स्वामिमहाराजः कविराजमहाशय-निर्दिष्ट-विधिनिषेधपालने न कदापि शैथिल्यं प्रादर्शयत्। जलस्य गलाधःकरणमपि न तेन कृतमासीत् कविराजोपदेशेन विना। एतद्विषये स्वामिमहाराजः प्राह—यदा मया तद्विषये मनः कृतं, तत्परं जलविन्दुरपि न मम गलाधोदेशे याति।

"For twenty-one days, I have refrained from water, and now in rinsing out my mouth, I find that the muscles of my throat close of their own accord against the passage of a single drop. The body is only a servant of the mind. What the mind dictates, the body will have to obey."

१) "स्वामि-शिष्यसंवाद", "स्वामिजीर वाणी ओ रचना"-ग्रन्थमालाया अष्टमखण्डस्य २२८ पृष्ठं द्रष्टव्यम्।

ईदृश-शारीरदुःखसत्त्वेऽपि पठनविषये स्वामिमहोदयस्य नासीद्विरतिः। मठस्य व्यवहारार्थं साम्प्रतं Encylopædia Britannika "एन्साइक्लोपिडिया ब्रिटानिका"-नामकः पञ्चविंशति-खण्डात्मको विपुलकायो ग्रन्थ आसीत् क्रीतः। नवीन-ग्रन्थराशिं परम-सुशोभनं दृष्ट्वा स्वामिमहाराजशिष्यः श्रीशरच्चन्द्र-चक्रवर्ती स्वामिनमुद्दिश्य प्राह—"परमविपुलायतनोऽयं ग्रन्थो

जीवनेनैकेनापि न पठितुं सुशकः" इति। शिष्यस्य न तदानीं ज्ञातमासीद्यत् स्वामिमहाराजस्तस्य दश-खण्डानामध्ययनं समाप्य एकादश-खण्डस्याध्ययने रत आसीत्।

स्वामिमहोदयस्ततः शिष्यमाहूय प्राह—"किं वदसि? ग्रन्थस्यास्य दश-खण्डेभ्यो यद् यत् त्वं ज्ञातुमिच्छसि, सर्वमेवाहं प्रत्युत्तरमुखेन वदिष्यामि। शिष्यः परमविस्मयाभिभूतः प्राह "अपि दशमखण्डावधि ग्रन्थं भवान् पठितवान्?"

स्वामिमहाराजः प्राह—"बाढम्। पठनव्यतिरेकेण कथमहं तथा वच्मि। अनन्तरं स्वामिमहाराजस्यादेशक्रमेण शिष्यः पुस्तकस्य तस्य कठिनान् कतिचन प्रश्नान् अपृच्छत्। स्वामिमहाराजो न केवलमुत्तरं ददौ परन्तु बहुस्थलेषु ग्रन्थस्याविकलभाषापारम्पर्यमपि उद्‌गीरयामास। शिष्यस्ततः प्राह—"अलौकिकीयं शक्तिर्न साधारणजनलभ्या"।

स्वामिमहोदयः प्राह—"जानीहि किल, ब्रह्मचर्यपालनेनैव केवलेन समस्तविद्या आयत्तीभवन्ति यथायथं—मानवो जायते श्रुतिधरः स्मृतिधरश्च। ब्रह्मचर्यस्याभावहेतोरस्मद्देशो जातोऽपध्वस्तः (१)।

स्वल्पक्षणात् परं स्वामिमहाराजः शिष्यस्यास्य सकाशे भारतीय-दर्शन-शास्त्रस्य युक्तिमालां प्रपञ्चयितुमारेभे। अथ ब्रह्मानन्दो हठात्तत्रागत्य शिष्यं तं निर्भर्त्स्य प्राह—

विवेकवैधुर्यमहो! महत्ते
विनोदनीयोऽस्ति यदा तु देवः।
तदा त्वमेनं विषये गभीरे
प्रणोदयन् खेदयितुं प्रवृत्तः? ॥ १६७

स्वामिमहाराजस्ततो गुरुभ्रातरं प्राह—"कस्तव चिकित्साशास्त्रीयान् विधि-निषेधान् पालयितुं यतेत? एते तु मम पुत्राः; यदि तेषां शिक्षादानार्थं मम देहपातोऽपि भवति—कस्तदर्थम् अणुमात्रमपि चिन्तयेत्।

"Who cares for your medical restrictions and all that stuff! They are my Sons; if in giving them instruction my body wears out, who cares a straw for that."

१) स्वामि-शिष्यसंवाद-ग्रन्थः।

नारीणां कृते वेलुडमठसदृशोऽन्यो मठोऽपि स्वामिमहोदयेन सुपरिकल्पित आसीत्। एकदा प्रातः स्वामिमहाराजः प्रियशिष्याय कस्मैचन भविष्यत्परिकल्पनां समुद्घाट्य प्राह—गङ्गाया अपरस्मिन् पारे मातृदेवीं केन्द्रीकृत्य नारीणां कृते अपरः कश्चन मठः संस्थापनीयः—यत्र नार्यः शिक्षादिकं संप्राप्य भारतीय-नारीसमाजोन्नयनार्थं प्रचारादिकार्यं परिचालयिष्यन्ति।

सौभाग्यात् १९५४ खीष्टाब्दे स्वामिमहोदयस्य तिरोधानात् पञ्चपञ्चाशद्वर्षानन्तरं श्रीश्रीमातृदेवीजन्म-शततमोत्सववर्षे—स्वामिमहोदयस्य सङ्कल्पोऽयमासीत् सार्थकरूपलाभधन्यः। सत्यं श्रीमठप्रतिष्ठेयं रामकृष्णसङ्घेतिहासे स्मरणीया घटना।

संस्कृतशिक्षाविषये स्वामिमहाराजस्योपदेशावली

**प्रसङ्गतः संस्कृतशिक्षां प्रति स्वामिमहाराजस्याकर्षणप्रकर्षविषये किञ्चिद् ब्रूमः। संस्कृतभाषाज्ञानं विना शास्त्रज्ञानार्जनं न सम्भवपरम्। ततः संस्कृतशिक्षायाः संप्रसारणार्थं स्वामिमहोदयः शिष्यान् सर्वदोपदिदेश। यथा "भारतवर्षस्य भविष्यत्"-संज्ञके भाषणे—"सर्वेषां स्वस्वमातृभाषया भावशिक्षा-दानमेकान्तावश्यकम्; संस्कृतशिक्षा च युगपत् प्रदातव्या; यतः संस्कृतशब्दानां ध्वनिमात्रं जातये ददाति ज्ञानं गौरवं सामर्थ्यञ्च। प्रख्यातानां रामानुज-चैतन्य-कबीराणां प्रयत्नावली भारतीयाधस्तनजनानां प्रगतये दर्शयति स्म तेषां महात्मनां साधूनां जीवितसमये समुत्कृष्टानि**

---

**Swamiji's advice regarding Sanskrit studies.**

"The ideas must be taught in the language of the people, at the same time, Sanskrit education must go on along with it; because the very sound of Sanskrit words gives a prestige and a power and a strength to the race. The attempts of the great Ramanuja, and of Chaitanya and of Kabir to raise the lower classes of India, show that

फलानि किल ; तथापि कथमेतेषां महाशिक्षादातॄणां जीवनावसानस्य शताब्दाभ्यन्तरे शिक्षाफलं तेषां लोपं यातम्—तद्विषये कारणं व्याख्यानेन प्रमाणीकर्तव्यम् । अस्य रहस्यमिदम्—नूनम् अधस्तन-जनानां समुन्नतिस्तैर्विहिता ; निश्चितं तेषां सर्वाङ्गीणप्रयत्न आसीद्यदेषां समुन्नयनमवश्यमेव कार्यमिति ; किन्तु ते सर्वजनेषु संस्कृतशिक्षायाः संप्रसारणार्थं कंचन सफलप्रयत्नं न कृतवन्तः । सुमहान् बुद्धदेवोऽपि साधारणजनस्य संस्कृतशिक्षां निरोध्य महान्तं प्रमादं चकार । तत्रभवान् सुतरां त्वरितं फलमियेष; ततोऽनुवादमुखेन तत्काले प्रचलितया 'पालि'भाषया प्रचारकार्यं विदधे । साधारणजनस्य भाषां महान् स व्यवजहार, जनास्तां बुबुधिरे इत्यत्रास्ते सौष्ठवम् । साधनञ्च तदासीन्महत्—यतस्तेन भावधारा त्वरितं संप्रससार दूरे सुदूरे च ; किन्तु तेन सह संस्कृतस्य संप्रचारणमप्यासीन्नितान्तकाम्यम् । साधितेऽपि ज्ञानस्य विस्तारे, तस्य गौरवहानिरजायत । प्रकम्पनसहनक्षमा आत्मगूढकृष्टिर्न तु बहिर्दृष्टफल-ज्ञानस्तूपः । ......सभ्यतावदेतादृग् ज्ञानमपि केवलं त्वगन्तरितम्—अत्यल्पघर्षणादेवास्याभ्यन्तराद्वाविरेति प्राचीनवर्वरः ।

---

marvellous results were attained during the life-time of those great prophets, yet the latter failures have to be explained, and cause shown why the effects of their teachings stopped almost within a Century of the passing away of these great masters. The secret is here, they raised the lower classes ; they had all the wish that these should come up, but they did not apply their energies to the spreading of the Sanskrit language among the masses. Even the great Buddha made one false step when he stopped the Sanskrit language from being studied by the masses. He wanted immediate and rapid results, and translated and preached in the language of the day, Pali. That was grand, he spoke in the language of the people,

ईदृशी जायते घटनापरम्परा—विपदपि तत्र। मातृभाषासु साधारणजनेभ्यः शिक्षा दातव्या भावविस्तारार्थं, तेन ते संवाद-संग्रहं करिष्यन्ति। किन्तु इतोऽभ्यधिकं प्रयोजनम्—आत्मगूढ-कृष्टिस्तेषां संसाधनीया। युष्माभिस्तथा कर्तुं न शक्यते चेत् साधारणजनानां समुन्नतावस्थायाः स्थायित्वमपि न सिध्यति। अनेन अन्या काचन जातिः संजनिष्यते, या संस्कृतभाषा-ज्ञान-सुविधाहेतोरेषामुपरि स्थिता करिष्यति कर्तृत्वमनीप्सितम्।

भो अधोजातिसंभूता जनाः! युष्माकं संरक्षणस्य युष्माक-मात्मोन्नतेः केवलोपायः संस्कृतपठनम्; उच्चजातिसंभूतैः सह संग्रामस्तान् प्रति मसीवर्षणम् आन्दोलनफेनोद्वमनं च न केवलं निरर्थकम् अशुभदायकं—परन्तु तेन घटते संग्रामो विवादश्च—ततो दौर्भाग्याद् भेदजर्जरितेयं जातिरधिकादधिकतरं भेदमवाप्स्यति। जातिविधिसमीकरणस्य केवलोपायः कृष्टेर्यथायथमासादनम्, उच्चतर-जातिसमूह-बलाधायिकायाः शिक्षाया ग्रहणञ्च। तथा कृते युष्माकमभीष्टं युष्माभिरासादितमेव।"

अतः परमपि वयं द्रक्ष्यामः किल जीवनस्य बहुमूल्यवदन्तिम-दिवसेऽपि स्वामिमहोदयो वेदविद्याप्रचारार्थं संस्कृतशिक्षायाः

---

and the people understood him. That was great, it spread the ideas quickly and made them reach far and wide, but along with that, *Sanskrit ought to have spread. Knowledge came, but the prestige was not there.* It is culture that withstands shocks, not a simple mass of knowledge......... Knowledge is only skin-deep, as civilization is and a little scratch brings out the old savage. Such things happen; this is the danger. Teach the masses in the vernaculars; give them ideas; they will get information, but something more is necessary; give them culture. Until you give them that, there can be no permanence in the raised condi-

संप्रसारणार्थं च न केवलमुपदिदेश, परं तदर्थं कर्मसाधनव्यपदेशेन सुदीर्घसमयं व्ययितवांश्च । यथा नारीणां सर्वोत्तम-हितसाधनार्थं नारीमठस्थापनपरिकल्पनासीत् स्वामिमहाराजस्य, तथा भारतीय-सर्वजातीनां समुन्नति-विधानार्थं परस्परभेदविसंवादप्रशमनार्थं च संस्कृतशिक्षासंप्रसारक-वेदमहाविद्यालय-संस्थापनमासीत् स्वामि-महाराजस्यान्तरिकध्यानं-गर्भित-परमाभिलाषः । आशासे परि-कल्पित-विवेकानन्द-विश्वविद्यालय-संस्थापनद्वारा स्वामिमहाराज-स्याशय एषोंऽशतोऽपि परिपूर्तिमेष्यतीति ।

महासमाधेरुद्योगः

मार्च-मासादारभ्य जुन-मासपर्यन्तं स्वामिमहोदयस्य शारीरिका-वस्था प्रायेण समैवासीत्—क्वचित् किञ्चिद् वृद्धिः क्वचित् किञ्चिद् ह्रासो वा रोगस्य । अस्मिन् समये स्वामिमहाराजस्य परिश्रमस्य नासी-दन्तः ।

जुन-मासस्य प्रथमभागादेव स्वामिमहाराजो मठ-विषयेऽपि अनासक्तोऽजायत । किञ्चिद् जिज्ञास्यमानोऽपि नासावदादुत्तरम् ;

---

tion of the masses. There will be another caste created, having the advantage of the Sanskrit language, which will quickly get above the rest and rule them all the same, the only safety I tell you men who belong to the lower castes, the only way to raise your condition, is to study Sanskrit, and this fighting and writing and frothing against the higher castes is in vain, it does no good, and it creates fight and quarrel, and this race, unfortunately, already divided, is going to be divided more and more. The only way to bring about the levelling of caste is to appropriate the culture, the education which is the strength of the higher castes. That done, you have what you want. Vide Swamiji's Address "The Future India", Swamiji Vivekananda's Works, vol. III, pp. 290 - 291.

उपदेशायानुरुद्धोऽपि रुष्टोऽजायत। सर्वदा ध्याननिष्ठ इव स दिवसान् व्यनैषीत्।

एकदा स्वामिमहाराजः प्राह—"स्वहस्त-पक्वस्यान्नस्य स्वयं सर्वेभ्यः परिवेशनं करिष्यामि"। स्वामिमहोदयस्तथाऽकरोत्। हास्य-कौतुकैः सर्वेषामानन्दं स्वामिमहाराजो वर्धयामास। भोजनानन्तरं स्वामिमहाराजो भृङ्गाराद् मुखादि-प्रक्षालन-जलमपि ददौ (१)।

कश्चन शिष्यः प्राह—"किं क्रियते भवता, स्वामिमहाराज? भवतः सेवकोऽहं, कथं भवत्सेवामहं ग्रहीष्यामि?

स्वामिमहोदयस्ततः प्राह, "अपि यीशुख्रीष्टमहोदयः शिष्याणां पादयुगलानि न प्रक्षालितवान्?



स्वामिमहोदयस्योत्तरमाकर्ण्य—

मूकः स शिष्यो निमिषादजायत
विज्ञाय वाक्यस्य गभीरमाशयम्।
प्रक्षालनं शिष्यपदद्वयस्य यत्
ख्रीष्टेन, तत् त्वन्तिम-काल आगते॥ १६८

महातिरोधानस्य सप्ताहात् प्राक् स्वामिमहाराजः स्वामिशुद्धानन्देन पञ्जिकामेकां संग्राहयामास। चिरं निविष्टमनाः पञ्जिकामेतां दृष्ट्वा

(१) स्वामिमहोदयस्यावस्थां वीक्ष्य गुरु-भ्रातरश्चिन्तान्विता बभूवुः। स्वामिमहोदयस्य क्रमाधिकध्यानावस्था किं सूचयति? श्रीरामकृष्णः प्राह—"यदाऽसौ ज्ञास्यत्यात्मानं, नासौ देहकोषबद्धो भविष्यति"। एकदा कश्चन गुरु-भ्राता स्वामिमहोदयमपृच्छत् "स्वामिमहाराज! अपि भवता ज्ञातं भवान् कः?" इति। निर्लिप्त-कण्ठः स्वामिमहाराजः प्राह—"ज्ञातम्"। ततः सर्वेषां बोधोऽजायत महातिरोधानाय स्वामिमहाराजः सुसज्ज इति।

कालेऽस्मिन् तस्य देहात् सर्वव्याधिलक्षणानि दूरं गतानि, गुरुभ्रातृभिः सह कौतुकादिना समयश्च स्वामिमहाराजेनासीद्यापितः।

स्वपार्श्वे एव तां संस्थापयामास। अन्येद्युरपि स पञ्जिकायां दत्तचित्तो बभूव। किन्तु कोऽपि नाजानात् तस्य मनसि किमासीदिति।

पञ्जिकाक्रयाद् दिवसपञ्चकादनन्तरमेकदा मठे शिष्यैः सह विचरणशीलः स्वामिमहाराजः—"घटिते मम देहावसाने, ममाग्निसंस्कारस्तत्रैव कार्यः" इत्युक्त्वाङ्गुलीसंकेतेन स्थानविशेषं शिष्यानदर्शयत्। तत्रैव पश्चात् स्वामिमहोदयस्य समाधिमन्दिरं निर्मितम्।

महातिरोधानम्

१९०२ खीष्टाब्दीय-जुलाइमासस्य चतुर्थो दिवसः। स्वामिमहोदयो गात्रोत्थानान्तरं सर्वैः सह ध्यानसाधनार्थं प्रतिदिनं प्रयाति स्म। अद्य तु न तथाऽकरोत्। परन्तु स्मृति-मणिमञ्जूषा-सञ्चितामतीत-घटनावलीं समुदीरयामास शिष्येभ्यः।

परस्मिन् दिवसे शनिवासरे तिथिरासीदमावस्या, ततो मठे कालीपूजा कर्तव्या। तदर्थं रामकृष्णानन्दपितृदेवः सुपण्डित ईश्वरचन्द्रभट्टाचार्यः समाहूत आयातः। तेन सार्धं परामर्शक्रमेण स्वामिमहाराजः स्वामिशुद्धानन्दं बोधानन्दञ्च पूजोपकरणसंग्रहायानुरुरोध।

अतः परं स्वामिमहाराजः श्रीठक्कुरमन्दिरं प्रविश्य वातायनादिकं चकार संरुद्धम्। सुदीर्घघटिकात्रयानन्तरं स बहिर्जगाम, गायति स्म च तदेव सङ्गीतम्—

"मनश्चल स्वीयनिकेतनम्।
संसार-विदेशे विदेशिनो वेशे भ्रमसि किमकारणम्॥ १६९
विषयपञ्चकं तथा भूतगणः
सर्वेऽनात्मीयाः कोऽपि न निजजनः।
परप्रेम्णा कथं जातमचेतनं
विस्मरस्यात्मजनम्? १७०
सत्यपथे कुरु मन आरोहणं
प्रेमालोकोज्ज्वलश्चलानुक्षणम्।

तव तु संवलं भवतु पुण्यधनम्
अतियतन-संगोपनम् ॥ १७१
लोभमोहादिकः पथि दस्युगणः
करोति पथिक-सर्वस्वहरणम् ।
परमयतनं कुरु प्रहरिणौ
शमदमौ सावधानम् ॥ १७२
साधुसङ्ग-नाम्नाऽऽस्ते पान्थधाम
श्रान्तस्य तव तत्र भवतु विश्रामः ।
पथिभ्रमे कुरु पथिजिज्ञासनं
प्रतिपान्थालय-जनम् ॥ १७३
यदि पथि कोऽपि भयसमुदयः
प्राणपणं राजशपथो देयः ।
पथि राजा यतः प्रबलप्रतापः
शमनोऽनुयाति यस्य शासनम् ॥ १७४

दिव्यानन्दोन्मत्तः स्वामिमहाराजस्तदानीं प्राह—"यद्यन्यः कोऽपि विवेकानन्दोऽद्याभविष्यत् नूनं तस्य ज्ञातमभविष्यद् विवेकानन्देन किं किं कृतमिति। कालेन पुनर्बहूनां विवेकानन्दानां जन्म ध्रुवमेव संघटिष्यते।"

मध्याह्नेऽद्य स सर्वैः सह भोजनमैच्छत्। असावासीन्नियमव्यतिक्रमः। रोगवृद्धरनन्तरं स एकाकी एव पथ्यमग्रहीत्। पुनस्तु भोजनानन्तरं दिवसेष्वन्येषु विश्राममलभत; अद्य तस्मिन्नपि पुनरघटत व्यतिक्रमः। अद्य भोजनावसान एव स्वामिमहाराजो ब्रह्मचारिणः संस्कृतव्याकरणं लघुकौमुदीं पाठयितुमारेभे। एवं पाठननिरत आसीत् स्वामिमहाराजो घटिकात्रयम्।

अपराह्ण-समये स्वामिमहाराजः प्रेमानन्देन सह वेलुडहट्टस्थानपर्यन्तमगमत् परिभ्रमणव्यपदेशेन। प्रत्यावृत्तश्च सर्वैः सह संलपनादिकं चकार। सन्ध्यारात्रिकसमये कृतप्रणामाः सर्वे ब्रह्मचारिणः स्वस्वकार्य-

व्यपदेशेन स्थानान्तरं जग्मुः। स्वामिमहोदयश्च द्वितलस्थशयनकक्षं प्रविवेश।

एको ब्रह्मचारी सर्वदैव स्वामिमहोदयस्य सेवारतोऽतिष्ठत्। ब्रह्मचारिणमादिदेश स्वामिमहाराजः द्वाराणां वातायनानां च उन्मोचनाय। ततः स्वामिमहोदयः पूर्वास्यः संश्चिरं श्रीरामकृष्ण-लीलास्थलं दक्षिणेश्वर-मन्दिरं निर्निमेषनेत्रं पर्यवैक्षत।

सहसा स्वामिमहाराजस्तं शिष्यमादिदेश—बहिः स्थितस्त्वं नामजपं कुर्विति। स्वयं च पद्मासनस्थो ध्यानमारेभे—

मातरमहं स्मरामि मणिमणिमहं शिवाय महते।
पितरश्च परमहंसं जगतो दुःखोच्छेदव्रतम्॥ १७५
हास्यालोकेन मातुर्विकशतु सततं पङ्कजानां सहस्रं
झङ्कारो गीतकानां मदयतु भुवने संहतिं कोकिलानाम्।
शिञ्जाऽस्या नूपुराणां जनयतु तटिनी-रङ्गभङ्गे तरङ्गं
शोभा चेलाञ्चलीया तरुविटपघटास्वेतु नित्यं प्रकाशम्॥ १७६
आनन्दरूपिणी माता भरणी सारदामणिः।
स्थापयतु पदद्वन्द्वं चेतःशतदले मम॥ १७७

मुहूर्तेन स्वामिमहाराजो गभीरध्यानमग्नो बभूव। अथ स्वामिमहाराजो घटिकामितसमयानन्तरम् आसनं परित्यज्य कक्षतलस्योपरि शिश्ये। शायित-महापुरुषस्य देहस्तदा स्थिरोऽजायत। यामिन्या नवमघटिका तदानीं व्यतीता। दीर्घश्वासद्वयपतनानन्तरं योगिवरो महासमाधिमग्नोऽजायत।

उद्भ्रान्त इव ब्रह्मचार्यसौ समागत्य स्वामि-प्रेमानन्दाद्वैतानन्द-बोधानन्दादिकमाह्वयामास। ते समागत्यापश्यन् तेषां ज्योतिर्मय-मण्डलीभूत-महापुरुषः स्वेच्छयेव स्वर्धाम गतः।

भागवत-करुणाधारैकदाऽस्यैव महापुरुषस्य देहं समाश्रित्य जगति वर्षिता बभूव। हठात् कुत्र महतो महीयान् स गतः को वा जानीयात्?

अस्य नरोत्तमस्य शिवदेहधारिणः कण्ठं समाश्रित्य या वाणी दुन्दुभि-निर्घोषैर्जगज्जनश्रवणकुहरं प्रपूरयामास, यस्याः प्रभावेण प्राच्य-पाश्चात्त्य-जगतोर्जातं चिरसौहार्दं महामेलनं, पुनः यदनुसरणेन च भारतवर्षस्य समागता स्वाधीनता, सा वाणी कदापि न स्थगिता भविष्यति। स्वर्गा-न्तरीक्ष-पातालेषु सा निरन्तरं परिभ्रमति भ्रमिष्यति च। शिवमयी शिववाणी स्थास्यति चिराय जगत्सम्बलं, भारतवर्षस्य चाक्षय्यमङ्गल-हेतुः।

चिरं शृण्वन्तु विश्वेऽमृतस्य पुत्राः स्वामिमहाराजस्य शाश्वतिकसत्य-भाषणम्—"भवतु वा, जीर्णवसनवच्छरीरमिदं परित्यक्तुकामोऽहं भविष्यामि। किन्तु तेन कार्यं मम न विरतिमाप्स्यति। याव-ज्जगदिदं न ज्ञास्यति भगवता सहात्मन ऐक्यं तावदहं सर्वत्र जनान् प्रोत्साहयिष्ये, सत्य-प्रणोदितान् करिष्ये" (१)।



जयतु जननी सारदामणिः।
जयतु श्रीपरमहंसदेवः।
जयतु श्रीस्वामिविवेकानन्दः।

ॐ शान्तिः ! ॐ शान्तिः !! ॐ शान्तिः !!!

---

(१) "It may be that I shall find it good to get outside my body—to caste it off like an worn-out garment. But I shall not cease to work ! I shall inspire men everywhere, until the world shall know that it is one with God."

229